॥ श्रीः ॥

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़पुस्तकमालायाः

२४

न्यायविभागे (३) तृतीयपुष्पम् ।

षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचित-

# न्यायवार्तिकतात्पर्यटीकायाः

काशीस्थश्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयाध्यापकेन

न्यायाचार्य पं० श्रीराजेश्वरशास्त्रिद्राविडेन संशोधितः ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरीज आफिस,

विद्याविलास प्रेस-गोपालमंदिर के उत्तर फाटक,

बनारस सिटी ।

१९८२

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः

२४

न्यायविभागे (३) तृतीयपुष्पम् ।



षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचित-

# न्यायवार्तिकतात्पर्यटीकायाः

प्रथमाध्यायः प्रथमोभागः ।

काशीस्थश्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयाध्यापकेन
न्यायाचार्य पं० श्रीराजेश्वरशास्त्रिद्राविडेन संशोधितः ।

काश्यां—

चौखम्बासंस्कृतग्रन्थमालाप्रकाशक-श्रीयुतहरिदासगुप्तात्मज-
श्रेष्ठिजयकृष्णदासगुप्तमहाशयेन स्वकीये 'विद्याविलास'
नाम्नि यन्त्रालये मुद्रयित्वा प्रकाशिता ।

१९८२

KASHI-SANSKRIT-SERIES,
(HARIDAS SANSKRIT GRANTHMALA)
24.
*Nyaya Section No. 3.*

# NYAYAVARTIK-TATPARYA TIKA

by

SRI VACHASPATI MISHRA.

*1st Adhyaya. Vol. I.*

EDITED BY

*Nyayacharya*
*Pandit Sri Rajeshwara Sastri Dravid.*
Professor,
SRI VALLABH RAM SALIG RAM SANGA-
VEDA VIDYALAYA, BENARES.

*Printed Published & Sold by*
JAI KRISHNA DASS-HARI DASS GUPTA,
THE CHOWKHAMBA SANSKRIT SERIES OFFICE,
Vidya Vilas Press, Gopal Mandir Lane,
Benares City.
1925.

१३३



Printed-Published & sold by

JAI KRISHNA DAS GUPTA,

The Chowkhamba Sanskrit Series Office,

VIDYA VILAS PRESS,

Gopal-Mandir-Lane,

*BENARES.*

॥ श्रीगुरुःशरणम् ॥

## न्यायवार्त्तिकतात्पर्यटीकायां प्रथमाध्यायस्य

# विषयसूचीपत्रम् ।


| | पृ० | पं० |
|---|---|---|
| मङ्गलाचरणम् | १ | ६ |
| वार्तिकारम्भप्रयोजनम् | ,, | १६ |
| वार्तिकस्थप्रथमश्लोकव्याख्या | २ | ७ |
| प्रथमसूत्रतात्पर्यकथनम् | ३ | ७ |
| वार्तिकेकृतस्यापिमङ्गलस्यशास्त्रेनिवेशाभावः | ३ | ३ |
| शास्त्रस्य निःश्रेयसेनसहसम्बन्धकथनम् | ३ | १२ |
| भाष्यस्थादिवाक्यतात्पर्यकथनम् | ४ | ७ |
| शास्त्रस्यनिःश्रेयसप्रयोजनकत्वाक्षेपस्तत्समाधानपर भाष्यव्याख्यानम् | ,, | १३ |
| शास्त्रस्वरूपप्रदर्शनम् | ६ | ८ |
| प्रमाणादिपदार्थानां प्रामाणिकत्त्वम् | ७ | ३ |
| श्रेयसां निरूपणम् | ८ | ७ |
| आत्यनिकदुःखनिवृत्तेःप्रवृत्त्यङ्गत्वम् | ९ | १८ |
| आत्यन्तिकश्रेयोनिरूपणम् | ८ | १५ |
| प्रवृत्तिसामर्थ्यादित्यस्यविवरणम् | १० | ८ |
| आदिवाक्याक्षेपस्तत्समाधानं च | ११ | ३ |
| प्रामाण्यस्यानुमानगम्यत्त्वम् | ११ | १७ |
| भाष्यस्थादिवाक्यस्यव्याख्यान्तरम् | १४ | ४ |
| अवयवार्थव्याख्यानम् | १६ | १७ |
| प्रमाणसंप्लवे आक्षेपपरिहारौ | १७ | १ |
| धारावाहिकबुद्धीनां प्रामाण्यम् | १९ | ४ |
| अनधिगतार्थगन्तृत्त्वस्य नप्रामाण्यरूपता | २१ | १ |
| प्रमाणस्यैव साक्षादुपलब्धिसाधनत्त्वम् | २३ | ४ |
| प्रमातृप्रमेयापेक्षया प्रमाणस्यसातिशयत्त्वम् | २५ | १ |
| अर्थग्रहणस्य तात्पर्यनिरूपणम् | २६ | १३ |
| प्रमाणपदप्रयोजनम् | २७ | १ |
| सोऽयं प्रमाणार्थोऽपरिसङ्ख्येयइतिभाष्यव्याख्यानम् | २८ | १९ |
| प्रमात्रादिचतुर्वर्गेप्रमाणस्यैवार्थवत्त्वम् | २९ | २० |
| स्वातन्त्र्यपदार्थनिरूपणम् | २१ | १ |
| तत्त्वपदार्थव्याख्यानम् | ३२ | १० |
| असतोऽपि प्रमाणेनोपलब्धिः | ३३ | १५ |
| प्रथमसूत्रस्यावयवार्थः | ३५ | १२ |
| निःश्रेयसद्वैविध्यम् | ३७ | ९ |

| | पृ० | प० |
|---|---|---|
| संशयादीनां पृथग्वचनप्रयोजनम् | ३९ | २ |
| प्रयोजनपदोपादानप्रयोजनम् | ४० | १५ |
| न्यायस्यापि प्रयोजनाश्रयत्त्वम् | ४१ | १५ |
| न्यायस्वरूपनिरूपणम् | ४२ | २ |
| प्रत्यक्षागमविरोध्यनुमानस्याभासत्त्वम् | ४३ | १ |
| दिङ्नागोदाहृतोदाहरणदूषणम् | ४५ | ११ |
| आगमविरुद्धानुमानोदाहरणम् | ४६ | ९ |
| कापालिकाक्षेपनिरसनम् | ४७ | ९ |
| नानुमानविरुद्धमनुमानमपितु सत्प्रतिपक्षम् | ४८ | २ |
| उपमानविरुद्धमनुमानं नोक्तम् | ४९ | १० |
| वितण्डायाःवादजल्पयोश्चसप्रयोजनत्त्वम् | ५१ | १ |
| दृष्टान्तनिरूपणम् | ५२ | ५ |
| सिद्धान्तनिरूपणम् | ५३ | ९ |
| अवयवनिरूपणम् | ५४ | ६ |
| प्रतिज्ञाहेत्वोरागमानुमानत्त्वम् | ५७ | १ |
| उदाहरणं प्रत्यक्षम् | ५८ | ९ |
| उपमानमुपनयः | ,, | १६ |
| निगमननिरूपणम् | ५९ | ४ |
| तर्कनिरूपणम् | ६० | ६ |
| निर्णयनिरूपणम् | ६३ | ४ |
| वादनिरूपणम् | ,, | १६ |
| हेत्वाभासानां जल्पवितण्डयोश्चनिरूपणम् | ६४ | १ |
| वादेदेशनीयत्वादितिभाष्यव्याख्यानम् | ६५ | १ |
| छलजातिनिग्रहस्थानानां पृथगुपदेशप्रयोजनम् | ६७ | १० |
| आन्वीक्षिकीप्रयोजनकथनम् | ६९ | १ |
| द्वितीयसूत्रस्यावतारणम् | ७० | ५ |
| चतस्रः प्रतिपत्तयआत्मादौ | ७१ | १ |
| योगविभागः सूत्रलक्षणम् | ८१ | १ |
| नास्तितासेपखण्डनम् | ८३ | ८ |
| अख्यात्यसत्ख्यात्योर्निरासः | ९५ | १२ |
| अख्यातिमतोपपादनम् | ९७ | २० |
| अख्यातिमतनिरासः | ८९ | ३ |
| तत्त्वज्ञानस्यापवर्गेक्रमेणहेतुत्त्वम् | ९१ | ५ |
| पूर्वापरज्ञानयोर्बाध्यबाधकभावप्रयोजकम् | ९३ | १० |
| धियां तत्त्वपक्षपातः | ९५ | २ |
| सुखं दुखानुषङ्गाद्धेयम् | ९७ | ४ |
| तृतीयसूत्रावतारणम् | ९८ | १ |
| विभागपरस्यापिलक्षणप्रतिपादकत्त्वम् | ९९ | ७ |
| उद्दिष्टविभागानर्थक्यशङ्कानिरासः | १०० | ६ |
| प्रत्यक्षशब्देसमासकथनम् | १०१ | १ |
| शक्तिनिरूपणम् | १०३ | ८ |
| अनुमानादिपदव्युत्पत्तिः | १०४ | ४ |

| | पृ० | प० |
|---|---|---|
| प्रत्यक्षादीनां प्रमाणफलविभागः | १०५ | २ |
| प्रत्यक्षादिक्रमोद्देशप्रयोजनैकदेशिमतनिरासः | १०७ | २ |
| विभागवचनोपपत्तिः | १०७ | ५ |
| चतुर्थसूत्रावतारणम् | १०८ | ८ |
| सन्निकर्षभेदनिरूपणम् | १०९ | १ |
| विशेषणविशेष्यभावसमर्थनम् | १११ | १ |
| अनुपलब्धिप्रमाणखण्डनम् | ११२ | १ |
| प्रत्यक्षस्य कारणान्तरानभिधानेकारणम् | ११३ | ५ |
| आत्ममनः संयोगस्यसमानत्वादग्रहणम् | ११५ | १ |
| सान्तरग्रणस्य व्याख्यानम् | ११७ | ९ |
| सान्तरइतिग्रहणमिति तुखण्डनम् | ११९ | १५ |
| इन्द्रियाणामप्राप्यकारित्वखण्डनम् | १२१ | १ |
| सुखादीनां ज्ञानाभेदखण्डनम् | १२३ | १ |
| अर्थानां नामधेयतादात्म्योपपादनम् | १२५ | १ |
| अर्थानांनामधेयतादात्म्यखण्डनम् | १२७ | ४ |
| ज्ञानार्थयोरभेदखण्डनम् | १२९ | २० |
| अव्यभिचारिपदतात्पर्यम् | १३१ | १ |
| सविकल्पस्य प्रत्यक्षत्वखण्डनम् | १३३ | २० |
| सविकल्पस्य प्रत्यक्षत्वसमर्थनम् | १३७ | २० |
| व्यवसायात्मकपदकृत्यविचारः | १४५ | १९ |
| प्रत्यक्षलक्षलक्षणाक्षेपपरिहारः | १४७ | १ |
| तन्त्रान्तरीयप्रत्यक्षलक्षणखण्डनम् | १५१ | १ |
| अनुमानलक्षणनिरूपणम् | १५६ | १ |
| तत्पूर्वकमित्यस्यविग्रहत्रयप्रदर्शनम् | १५७ | १ |
| अविनाभावस्यतादात्म्यतदुत्पत्तिभ्यांनिश्चयः | १५८ | ११ |
| तादात्म्यतदुत्पत्तिभ्यामविनाभावखण्डनम् | १५९ | १४ |
| वैशेषिकाभिमतचतुष्प्रकारसम्बन्धस्यानुमानाङ्गत्वाभावः | १६४ | १३ |
| व्याप्तिज्ञानस्य कारणाभिधानम् | १६६ | १० |
| त्रिविधमितिसूत्रावयवव्याख्यानम् | १७१ | १० |
| पूर्ववदित्याद्येकवाक्यतयात्रिविधमित्यस्यव्याख्या | १७३ | १५ |
| भाष्यकृन्मतेनसूत्रव्याख्यानम् | १७४ | १० |
| दिक्प्रत्यक्षतानिराकरणम् | १७७ | २१ |
| स्वमतेनसूत्रव्याख्यानम् | १७८ | १५ |
| दिग्नागकल्पितपक्षस्यदूषणम् | १८० | ११ |
| भाष्योक्तानुमानविशेषविचारः | १८३ | ७ |
| अनुमानस्यप्रत्यक्षवैलक्षण्यम् | १८५ | ६ |
| दिग्नागलक्षणदूषणम् | १८८ | ९ |
| अनुमानलक्षणान्तरदूषणम् | १९० | १ |
| उपमानलक्षणम् | १९६ | ११ |
| शब्दलक्षणम् | २०१ | १० |

| | पृ० | प० |
|---|---|---|
| दिग्नागकृतदूषणखण्डनम् | २०५ | १ |
| शब्दप्रमाणविभागः | २०७ | ४ |
| प्रमेयविभागः | २०९ | १ |
| आत्मानुमापकहेतवः | २११ | १ |
| शरीरलक्षणम् | २१८ | १६ |
| इन्द्रियलक्षणम् | २२१ | १० |
| अर्थलक्षणम् | २२४ | १३ |
| बुद्धिलक्षणम् | २३३ | १ |
| मनोलक्षणम् | २३४ | १८ |
| प्रवृत्तिलक्षणम् | २३५ | २३ |
| दोषलक्षणम् | २३६ | १० |
| प्रेत्यभावलक्षणम् | २३७ | ६ |
| फललक्षणम् | ,, | १६ |
| दुःखलक्षणम् | २३८ | ७ |
| अपवर्गलक्षणम् | २३८ | २१ |
| संशयलक्षणम् | २४३ | ६ |
| प्रयोजनलक्षणम् | २६० | ४ |
| दृष्टान्तलक्षणम् | २६१ | १५ |
| सिद्धान्तलक्षणम् | २६२ | १३ |
| अवयवलक्षणम् | २६६ | ५ |
| प्रतिज्ञालक्षणम् | २६७ | २३ |
| हेतुलक्षणम् | २७५ | १० |
| उदाहरणलक्षणम् | २९३ | २२ |
| उपनयलक्षणम् | २९८ | १८ |
| निगमनलक्षणम् | ३०० | ४ |
| तर्कलक्षणम् | ३०४ | १३ |
| निर्णयलक्षणम् | ३०९ | ६ |
| वादलक्षणम् | ३१३ | १ |
| जल्पलक्षणम् | ३२७ | ९ |
| वितण्डालक्षणम् | ३२९ | ७ |
| हेत्वाभासलक्षणम् | ३३० | १६ |
| अनैकान्तिकलक्षणम् | ३३६ | ५ |
| विरुद्धलक्षणम् | ३६८ | २२ |
| प्रकरणसमलक्षणम् | ३४१ | १८ |
| असिद्धलक्षणम् | ३४४ | १ |
| बाधितलक्षणम् | ३४६ | २४ |
| छलसामान्यलक्षणम् | ३४९ | ७ |
| वाक्छललक्षणम् | ३४९ | १७ |
| सामान्यछललक्षणम् | ३५१ | १० |
| उपचारच्छलम् | ३५१ | २० |
| जातिनिग्रहस्थानलक्षणम् | ३५३ | १९ |


समाप्तं प्रथमाध्यायस्यविषयसूचीपत्रम् ।

॥ श्रीगुरुः शरणम् ॥

# न्यायवार्तिकतात्पर्यटीकाया भूमिका।

अथ तमेवविदित्वाऽतिमृत्युमेति नान्यः पन्था अयनायविद्यते तमेवं विद्वानमृतइहभवतीत्यादिश्रुतिभिरात्मतत्त्वज्ञानमेव निःश्रेयससाधनं नेतरदिति सर्वतन्त्रसिद्धान्तः। तच्चात्मतत्त्वज्ञानं प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानान्तानां षोडशपदार्थानां तत्त्वज्ञानाधीनम्। यावदेतेषां तत्त्वं नैव सुपरिज्ञातं भवेत् तावदात्मतत्त्वं नैव ज्ञातं स्यात्किं बहुना यस्यकस्यापि पदार्थस्य तत्त्वमेव विविक्तरूपेण दुरधिगमं भवेदतः सिद्धं मुमुक्षूणामात्मतत्त्वं जिज्ञासमानानां षोडशपदार्थतत्त्वज्ञानमावश्यकमिति तन्निरूपणाय भगवान्महर्षिर्गौतमः पञ्चाध्यायात्मकं न्यायशास्त्रं प्रणिनाय। यत्र प्रथमेऽध्याये पदार्थानामुद्देशो लक्षणं प्रसङ्गाच्छलपरीक्षा द्वितीयेऽध्याये प्रमाणपरीक्षा तृतीयेऽध्याये आत्मादिप्रमेयषट्कपरीक्षा चतुर्थेऽध्याये उत्तरप्रमेयषट्कपरीक्षा तत्त्वज्ञानपरीक्षा पञ्चमेजातिपरीक्षासहितजातिनिग्रहस्थानविशेषलक्षणमित्यादयः पदार्था निरूपिताः। अत्र प्रत्येकमध्याये आन्हिकद्वयमितिसम्भूय दशान्हिकानि चतुरशीतिप्रकरणानि च सन्ति। यैरात्मतत्त्वज्ञानायान्यस्य कस्यापिदार्थस्य तत्त्वज्ञानाय यावत्किञ्चिदपेक्षितं तत्सर्वं निरूपितमिति सर्वेषां दर्शनानामिदमुपजीव्यमेतच्छास्त्रप्रतिपादितां शैलीमवलम्ब्यैवेतरैरपिशास्त्रकारैः स्वपक्षसाधनस्य कृतत्वात्। अतएवाहभाष्यकारः वात्स्यायनमहर्षिः-सेयमान्वीक्षिकी प्रमाणादिभिर्विभज्यमाना प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्। आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तितेतिसर्वोपजीव्यत्वमाह। अतएव चेदं शास्त्रमितरेभ्यः प्राचीनमित्यपि असंशयं वक्तुं शक्यम्, अन्यथेतरेषां दर्शनानां प्रवृत्तिरेव दुर्घटा स्यात् अत एव मनुरपि तत्र तत्र यस्तर्केणानुसन्धत्ते सधर्मं वेदनेतरइति प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्। त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता इत्यादिना महर्ष्युपदिष्टस्यशास्त्रस्य धर्मतत्त्वशुद्धये ज्ञातव्यत्त्वमभिहितवान्। किं बहुना भगवत्पूज्यपादाः श्रीशङ्कराचार्या अपितत्रतत्रैतस्य शास्त्रस्यात्यादरं प्रदर्शयन्तिस्म! तदेवंविधमपि सर्वोपकारकं मुमुक्षूणामत्युपादेयं परमर्षिप्रणीतं शास्त्रं परमगम्भीरमनायासेन दुरवबोधमनेकैरर्वाचीनैर्दुष्टव्याख्यानादिभिर्व्याकुलीकृतमिति तस्य तद्दोषपरिहाराय भाष्यलक्षणाक्रान्तं भाष्यं श्रीम-

गवान् वात्स्यायनो महर्षिर्विरचितवान् यत्राऽस्येन सूत्राणां भावाव-
बोधो भवति । तदपि भाष्यमत्यन्तं सङ्क्षिप्तमिति तद्विवर-
णायोद्योतकराचार्यो न्यायवार्तिकमिति निबन्धं सर्वोत्कृष्टं प्र-
णिनाय । यत्र भाष्यव्याख्याच्छलेन बौद्धमतं सम्यङ्निरूप्यानेक-
धाखण्डितम् । भाष्योपरि बौद्धानामाक्रमणं निरसितुमेव वार्तिकं नि-
र्मितमिति यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद । कु-
तार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्ध इति वार्तिकस्थ
प्रथमश्लोकेन ज्ञायते । एतद्वार्तिकं च सर्वेषामेव नैयायिकानां परमा-
वलम्बनं प्रामाणिकत्वेनादरस्थानमिति उदयनाचार्यादिभिर्निरूपितम्
परमेतस्यापि वार्तिकस्य याथातथ्येन भावावबोधो दुरधिगमो मन्द-
प्रज्ञानाम् । भाष्यस्य च क्लिष्टस्थलेषु भावानां न वार्तिककृतापि समीचीन-
या सरण्या विवरणं कृतमिति सर्वतन्त्रस्वतन्त्रः षड्दर्शनटीकाकृद्वा-
चस्पतिमिश्रो न्यायवार्तिकतात्पर्यटीकानामकं व्याख्यानं प्रणीतवान् ।
यदवलोकनेन भाष्याक्षराणां तात्पर्यज्ञानमनायासेन भवति । एतट्टीका-
तः प्राग्भाष्यमसंलग्नमेवासीदित्यपि नासम्भावितम् । अस्य च माहा-
त्म्यं सर्वविदितमेव, के नाम पण्डिता एतादृशा भवेयुर्यस्याचार्यस्य
लोकोत्तरविद्यासम्पदाऽन्वर्थं नाम न जानीयुः अनेन हि सर्वेष्वेव शास्त्रेषु
व्याख्यानं प्रणीतं यच्च शास्त्रं व्याख्यातुमारब्धं तदा तन्मयेनैव तच्छा-
स्त्रं व्याख्यातमित्ययं विशेषोऽन्याख्यात्रन्तरेभ्योऽस्य, यथा न्यायवार्ति-
कतात्पर्यटीकापरिशीलनाच्चेत्थमनुभवो भवति नायं वेदान्ती किन्तु नै-
यायिकः भामतीपरिशीलनसमये त्वित्थमनुभवो जायते नायं नैया-
कोऽपि तु वेदान्ती, एवंविधं निरङ्कुशं सर्वतन्त्रस्वतन्त्रत्वं नान्यस्य । ता-
त्पर्यटीकाया व्याख्यातारश्च श्रीमन्त उदयनाचार्या आरम्भ एव 'मातः स
रस्वति' 'तथा भव सावधाना वाचस्पतेर्वचसि न स्खलतो यथैते' इत्यने-
नास्याचार्यस्य वचसि महान्तमादरं दर्शयाम्बभूवुः एवं प्रायः सर्वै-
रेव दर्शनान्तर्गतैः पण्डितैः स्वीयग्रन्थेषु समादर एतस्य कृत इति नैत
दस्माभिः पृथग्वक्तव्यमवशिष्यते । तदिदं न्यायवार्तिकव्याख्यानं पू-
र्वं काश्यां मुद्रितमपि सम्प्रति दुर्लभमनेकेषु स्थलेषु बहुशुद्धियुक्तमिति
संशोध्य पुनर्मुद्रणं विधातुकामेन प्राचीनग्रन्थप्रकाशनरसिकेन श्रीयुत-
जयकृष्णदासगुप्तेनासदकृदभ्यर्थितोऽहं पूर्वमुद्रितं पुस्तकं तथा लिखि-
तानि च पुस्तकानि एशियाटिकसोसाइटीसमितितो लब्धानि स-
मादाय प्रायशो न्यायवार्तिकतात्पर्यपरिशुद्धितद्व्याख्यानन्यायनिब-
न्धप्रकाशेन च बहुषु स्थलेषु संवाद्य पाठभेदांश्चिर्धार्य महता परिश्रमेण
संशोध्य मुद्रयित्वा प्रकाशयितुमुपक्रान्तवान् परन्तु श्रेयांसि बहुवि-
घ्नानि इति न्यायेन नानाविधकार्यव्यग्रतया शीघ्रतया मुद्रणकार्येऽप्र-

वृत्तेतद्विरक्षाकुलितमनसां विदुषां कृते प्रथमाध्यायान्तमेकं खण्डं पृथक्कृत्यमुद्रयित्वापूर्वं प्रकाश्यसम्प्रतिद्वितीयाध्यायमारभ्यसम्पूर्णं मुद्रयित्वाप्रकाश्यते । अत्रचशीघ्रतयाप्रतीकलाभार्थं अनेनैवगुप्तमहाशयेनपूर्वंमुद्रितन्यायवार्तिकपुस्तकस्थपृष्ठपङ्क्त्यङ्कांस्तस्मिंस्तास्मिन्प्रतीकसन्निधौनिवेश्यस्थूलाक्षरैः प्रतीकानिस्थापितानि प्रतिपृष्ठं सूत्राध्यायान्हिकप्रकरणसङ्ख्याः पृष्ठगताश्चविषयाउपरिस्थूलाक्षरैःस्थापितायेनपाठकानामनायासेनतेषां २ विषयाणां तत्तदध्यायस्थत्वं ज्ञातं भवेत । आन्हिकान्तेऽध्यायान्तेच सूत्राह्निकप्रकरणसङ्ख्याः सम्भूयसन्निवेशिताः विषयसूचीपत्रंचनिर्माय पृथक्स्थापितम् । एवं महतापरिश्रमेण कृतेऽपि मुद्रणे प्रमादाद्दृष्टिदोषेण सीसकाक्षरयोजकदोषेणवा बहूनि स्खलितानि स्युरिति सम्भाव्यते तदर्थं विद्वांसोनिवेद्यन्तेयत्पठनपाठनावसरे एवंविधानिस्खलितानिदृष्टानिसर्वाण्येकीकृत्यमह्यं प्रदर्शयेयुस्तर्हिपुनर्मुद्रणावसरेतेषांपरिशोधनं कर्तुमहत्साहाय्यं लब्धं स्यात् । श्रीयुतजयकृष्णदासगुप्तेनगौतमसूत्रंवात्स्यायनभाष्यसहितं विश्वनाथवृत्तिसहितं पृथङ्मुद्राप्यन्यायवार्तिकंमुद्रापितम् इदानींतात्पर्यटीकापि मुद्रापिता अनेन न्यायशास्त्रस्य सर्वैव व्याख्यानपरम्परा प्राकाश्यमुपगता । तात्पर्यटीकायाश्चव्याख्यानं तात्पर्यपरिशुद्धिनामकं न्यायनिबन्धप्रकाशसहितं कलिकातानगर्यांमुद्रयतएवेति सम्पूर्णन्यायशास्त्रस्योद्धारः कृत इति यावन्तोधन्यवादाः प्रदेयास्तेसर्वेऽप्यल्पाएवेतिमन्ये । कोवा सूत्रकारोगोतमोमहर्षिः कोवाभाष्यकारो वात्स्यायनस्तथोद्योतकरश्चन्यायवार्तिककारः कोवातस्यस्थितिकालः कुत्रवासीत् तथा वाचस्पतिमिश्रश्चेत्यादिकं प्रत्नतत्त्वपण्डितैराधुनिकैर्बहुषुस्थलेषुनिरूपितमिति न चर्वितचर्वणेन पाठकान्विरक्तीकर्तुमिच्छाम ! केवलं विदुष एतदेवप्रार्थयेयदेवंविधमहापरिश्रमसम्पादितपुस्तकमवलोकय सफलयन्तुमामकं परिश्रममास्वादयन्तुवाचस्पतेर्वचसांरसंसमाकलयन्तु च न्यायशास्त्रसारं प्रचारयन्तुचसर्वत्राज्ञानान्ध्यनिराकरणपूर्वकंज्ञानालोकमिति मुहुर्मुहुः श्रीपरमेश्वरचरणयोर्निपतन् विरमाम्यनल्पजल्पनादिति विदुषां विधेयः ।

श्रीराजेश्वरशास्त्री द्राविडः
न्यायाचार्यः ।
श्रीवल्लभरामशालिग्रामसाङ्गवेद
विद्यालयाध्यापकः
रामघाट काशी ।

सं० १९८३
ज्येष्ठ शुक्ल १५ पूर्णिमायाम् ।

श्रीगुरुः शरणम् ।

न्यायवार्तिकतात्पर्यटीकायां द्वितीयाध्यायादार-
भ्यान्तं प्रतिपादितानां विषयाणां

# सूचीपत्रम् ।


| | |
|---|---|
| संशयपरीक्षाकारणनिरूपणम् | ३५७-१ |
| संशयपरीक्षा | ३५८-१ |
| प्रमाणसामान्यपरीक्षा | ३५९-१४ |
| प्रकारान्तरेण प्रमाणानामाक्षेपपरिहारौ | ३६९-१४ |
| प्रत्यक्षपरीक्षा | ३७२-१९ |
| प्रत्यक्षस्यानुमानेऽन्तर्भावशङ्का | ३७७-७ |
| तत्परिहारः | ३८०-१ |
| अवयविसाधनम् | ३८१-१ |
| अवयविपरीक्षा | ३८४-१ |
| अनुमानप्रामाण्यपरीक्षा | ४०२-७ |
| वर्तमानपरीक्षा | ४०३-१० |
| उपमानपरीक्षा | ४०९-१ |
| शब्दसामान्यपरीक्षा | ४१२-१७ |
| शब्दविशेषपरीक्षा | ४२१-३ |
| चतुष्ट्वपरीक्षा | ४३५-१ |
| शब्दानित्यत्वपरीक्षा | ४४१-६ |
| शब्दपरिणामपरीक्षा | ४६३-२० |
| शब्दशक्तिपरीक्षा | ४६९-५ |
| इन्द्रियभेदप्रकरणम् । | ४९६-१ |
| देहभेदप्रकरणम् । | ५०५-१ |
| चक्षुर्द्वैतप्रकरणम् । | ५०९-१९ |
| मनोव्यतिरेकप्रकरणम् । | ५१३-१ |
| अनादिनिधनप्रकरणम् । | ५१५-२ |
| शरीरपरीक्षाप्रकरणम् । | ५१९-७ |
| इन्द्रियपरीक्षाप्रकरणम् । | ५२०-२२ |
| इन्द्रियनानात्वपरीक्षाप्रकरणम् । | ५२७-१ |
| अर्थपरीक्षाप्रकरणम् । | ५३१-१५ |
| बुद्ध्यनित्यत्वप्रकरणम् । | ५३६-१ |

क्षणभङ्गप्रकरणम् । ५४१-१२
बुद्धेरात्मगुणत्वप्रकरणम् । ५६३-१७
बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् । ५६८-२२
बुद्धिमनः शरीरपरीक्षाप्रकरणम् । ५७९-१
शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम् । ५८०-८
दोषत्रैराश्यप्रकरणम् । ५८८-१
प्रेत्यभावप्रकरणम् । ५८९-१
शून्यतोपादाननिराकरणप्रकरणम् । ५९०-१९
ईश्वरोपादानतानिराकरणप्रकरणम् । ५९३-५
आकस्मिकत्वनिराकरणप्रकरणम् । ६०५-८
सर्वानित्यत्वनिराकरणप्रकरणम् । ६०६-११
सर्वनित्यत्वनिराकरणप्रकरणम् । ६०७-१४
सर्वपृथक्त्वनिराकरणप्रकरणम् । ६०९-१९
सर्वशून्यतानिराकरणप्रकरणम् । ६११-१३
सङ्ख्यैकान्तवादनिराकरणम् । ६१५-१
फलपरीक्षाप्रकरणम् । ६१९-१५
दुःखपरीक्षाप्रकरणम् । ६२५-२०
अपवर्गपरीक्षाप्रकरणम् । ६२८-१०
तत्त्वज्ञानोत्पत्तिपरीक्षाप्रकरणम् । ६३०-१
अवयवावदाविप्रकरणम् । ६३६-१
निरवयवप्रकरणम् । ६४९-१
बाह्यार्थभङ्गनिराकरणप्रकरणम् । ६५३-१५
तत्त्वज्ञानविवृद्धिप्रकरणम् । ६६५-१०
तत्वज्ञानपालनप्रकरणम् । ६६७-१
जातिलक्षणम् । ६७०-१
सत्प्रतिपक्षदेशनाभासप्रकरणम् । ६७२-१
जातिषट्कप्रकरणम् । ६७४-१
प्रसङ्गप्रतिदृष्टान्तसमप्रकरणम् । ६७७-१
प्राप्त्यप्राप्तिसमप्रकरणम् । ६७७-१
अनुत्पत्तिसमप्रकरणम् । ६७८-१
संशयसमप्रकरणम् । ६७९-१
प्रकरणसमप्रकरणम् । ६८१-३
अहेतुसमप्रकरणम् । ६८३-८
अर्थापत्तिसमप्रकरणम् । ६८३-१५

| | |
|---|---|
| अविशेषसमप्रकरणम् । | ६८४-१२ |
| उपपत्तिसमप्रकरणम् । | ६८५-१७ |
| उपलब्धिसमप्रकरणम् । | ६८८-३ |
| अनुपलब्धिसमप्रकरणम् । | ६८६-१० |
| अनित्यसमप्रकरणम् । | ६९०-२ |
| नित्यसमप्रकरणम् । | ६९१-१० |
| कार्यसमप्रकरणम् । | ६९२-१५ |
| षट्पक्षीप्रकरणम् । | ६९४-१५ |
| निग्रहस्थानविभागः । | ६९७-१ |
| प्रतिज्ञाहानिनिरूपणम् । | ६९९-२ |
| प्रतिज्ञान्तरनिरूपणम् । | ७०१-७ |
| प्रतिज्ञाविरोधनिरूपणम् । | ७०३-१५ |
| प्रतिज्ञासंन्यास निरूपणम् । | ७०६-१५ |
| हेत्वन्तरनिरूपणम् । | ७०६=१० |
| अर्थान्तरनिरूपणम् । | ७०८-२४ |
| निरर्थकनिरूपणम् । | ७१०-१५ |
| अविज्ञातार्थनिरूपणम् । | ७११-६ |
| अपार्थकनिरूपणम् । | ७११-१७ |
| अप्राप्तकालनिरूपणम् । | ७१२-१७ |
| न्यूननिरूपणम् । | ७१५-२० |
| अधिकनिरूपणम् । | ७१६-१० |
| पुनरुक्तनिरूपणम् । | ७१७-७ |
| अननुभाषणनिरूपणम् । | ७१७-१८ |
| अज्ञाननिरूपणम् । | ७२०-३ |
| अप्रतिभानिरूपणम् । | ७२०-७ |
| विक्षेपनिरूपणम् । | ,,-१५ |
| मतानुज्ञानिरूपणम् । | ७२१-६ |
| पर्यनुयोज्योपेक्षणनिरूपणम् । | ७२१-२४ |
| निरनुयोज्यानुयोगनिरूपणम् । | ७२३-१ |
| अपसिद्धान्तनिरूपणम् । | ७२३-१५ |
| हेत्वाभासनिरूपणम् । | ७२५-१३ |


समाप्तं विषयसूचीपत्रम् ।

श्रीगणेशाय नमः ।

# न्यायवार्त्तिकतात्पर्यटीका ।

श्रीवाचस्पतिमिश्रविरचिता ।

## प्रथमोऽध्यायः ।

विश्वव्यापी विश्वशक्तिः पिनाकी
विश्वेशानो विश्वकृद्विश्वमूर्त्तिः ।
विश्वज्ञाता विश्वसंहारकारी
विश्वाराध्यो राधयत्वीहितं नः ॥ १ ॥

नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने ।
निधये वाग्विशुद्धीनामक्षपादाय तायिने (१) ॥ २ ॥
ग्रन्थव्याख्याच्छलेनैव निरस्ताखिलदूषणा ।
न्यायवार्त्तिकतात्पर्यटीका ऽस्माभिर्विधास्यते ॥ ३ ॥
इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ ४ ॥

अथ (२) भगवता ऽक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च भगवता (३) पक्षिलस्वामिना किमपरमव-

(१) तापिने इत्यपि पाठः ।

(२) अथशब्दो मङ्गलार्थः ।

(३) भगवता इत्यत्र वर्द्धमानसम्मतः पाठः अत्रभवतेति । तदर्थः मान्येन, पक्षिलस्वामिना—वात्स्यायनेन ।

शिष्यते यदर्थं वार्त्तिकारम्भ इति शङ्कां निराचिकीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति ।

यदक्षपाद इति । ( वा० १-१ ) यद्यपि भाष्यकृता कृतव्युत्पादनमेतत्तथाऽपि दिङ्नागप्रभृतीभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमित्युद्द्योतकरेण स्वनिबन्धोद्द्योतेन ( १ ) तदपनीयते इति प्रयोजनवानयमारम्भ इति । सूत्रोक्तप्रयोजनानुवादः प्रयोजनवच्छास्त्रव्युत्पादनेन स्वनिबन्धस्य प्रयोजनवत्तां प्रेक्षावत्प्रवृत्त्यङ्गं दर्शयितुम्, व्युत्पादनमात्रस्य काकदन्तपरीक्षाग्रन्थसाधारण्येन प्रेक्षावत्प्रवृत्त्यनङ्गत्वात ।

अत्र चैकविंशतिप्रभेदभिन्नस्य दुःखस्याऽऽत्यन्तिकी निवृत्तिः शमः तस्मै । कस्य? जगतः । परमकारुणिको हि मुनिर्जगदेव दुःखपङ्कमग्नमुद्दिधीर्षुः शास्त्रं प्रणीतवान् । तत्र यदि कश्चिन्न प्रवर्त्तेत किमायातं शास्त्रस्य । न वा ऽनाधिकृतव्युत्पादनेनास्य तपोनिधेः कश्चिद्दोषः । तथा च विश्वामित्रस्त्रिशङ्कुं याजयामास वसिष्ठश्चाधमयोनिजामक्षमालामुपयेमे । तपःप्रभाव एव हि तादृशस्तेषां यत एवंविधाः पाप्मानो विलीयन्त इति । न चास्मदादीनां मन्दतपसामयं प्रसङ्गः । न हि गजानामुदर्य्यं तेजो वटकाष्ठमाशितं पचतीत्यस्मदादीनामप्युदर्य्येण ते-

(१) *तदिति* दिङ्नागादिसमुत्थापितं शास्त्राच्छादकं कुहेतुसन्तमसापनेयत्वेन परामृशता शास्त्रस्यैवाऽयं निबन्ध इति दर्शितं भाष्यस्य च तद्विवरणरूपस्य शास्त्रशरीररूपतया न शास्त्राधिक्यं मन्यते मीमांसाया इव वेदात अत एव नात्रत्यटीकायाः 'अकारि महतस्तस्य भारद्वाजेन वार्तिक'मिति भाष्याङ्गत्वप्रतिपादकवार्त्तिकान्तेन विरोधः भाष्यस्य शास्त्ररूपतया तद्व्याख्याने शास्त्रस्यैव व्याख्यानात् इति ध्येयम् ।

जस्ता तथा भवितव्यम् । कुतार्किकैर्दिङ्नागप्रभृतिभिराहितमज्ञानं कुतार्किकाज्ञानमिति । (१-३)

अविगीतशिष्टाचारपरंपराप्राप्तः परमशिष्टेन वार्तिककृता कृतो ऽपीष्टदेवतानमस्कारो ग्रन्थे न निवेशितः । न खल्वन्यदपि मङ्गलं शास्त्रे निवेशितं प्रसिद्धतरतया मङ्गलान्तरवच्छिष्या अवगमिष्यन्तीति सर्वमवदातम् ।

तत्र संक्षेपतः प्रथमसूत्रमनूद्य तस्य तात्पर्यमाह । प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिसूत्रम् । तस्य-शास्त्रस्य । अभिसम्बन्धवाक्यम् । आदिग्रहणेन क्रमप्राप्तस्यैव प्रथमं व्याख्यानं युक्तं न द्वितीयादेरिति दर्शितम् । अभिमतसम्बन्धो ऽभिसम्बन्धः-शास्त्रनिःश्रेयसयोर्हेतुहेतुमद्भावः तस्येदं सूत्रं वाक्यम् अभिसम्बन्धवाक्यम् । प्रमाणादिपदार्थतत्त्वज्ञानादित्यत्र हि तत्त्वं ज्ञायते ऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रमुच्यते । पञ्चम्या च तस्य हेतुत्वम् । न हि विषघ्नमन्त्रवत्स्वान्वयमात्रेण तदविवक्षितार्थं निःश्रेयसहेतुरिति, पदार्थतत्त्वावगमकरणतया शास्त्रमुपादिशति, न तु स्वरूपेण, तेन शास्त्रस्य निःश्रेयसे कर्त्तव्ये प्रमाणादितत्त्वावगमो ऽवान्तरव्यापार इत्युक्तं भवति । तथा च प्रमाणादिपदार्थतत्त्वं प्रतिपाद्यं प्रतिपादकं च शास्त्रमिति शास्त्रप्रमाणादिपदार्थतत्त्वयोर्ज्ञाप्यज्ञापकभावः प्रमाणादिपदार्थतत्त्वज्ञाननिःश्रेयसयोः कार्य्यकारणभावलक्षणश्च सम्बन्धः सूचितो भवति । तदिदमभिधेयसम्बन्धप्रयोजनप्रतिपादनार्थत्वं प्रथमसूत्रस्य । यत्पदार्थतत्त्वज्ञानस्य च यथा निःश्रेयसाधिगमं प्रत्युपयोगस्तथा ऽग्रे निवेदयिष्यते । विनिश्चिताप्तभावाश्च मुनेराप्तत्वेन तद्वाक्यात्प्रयोजनादि विनिश्चित्य प्रवर्त्स्यन्ति । आप्त-

त्वानिश्चये त्वर्थसंशयात्। न खलु कृष्यादावपि निश्चितसस्याधिगमानां प्रवृत्तिः। अन्तरा ऽवग्रहादिना प्रतिबन्धेन फलानुत्पादस्यापि सम्भवात्। न च प्रयोजनादिसंशयाभावे ऽपि(१) संशयस्य साधकबाधकप्रमाणाभावेन न्यायप्राप्तत्वेन तदभिधानमनर्थकमिति सांप्रतम्, विशेषस्मृत्यनपेक्षस्य संशयस्यानुत्पादात्। वाक्यात्तु विशेषस्मृतिरिति नानर्थक्यम्।

तदेवं प्रथमसूत्रतात्पर्य्यमुक्त्वा भाष्यस्यादिवाक्यतात्पर्य्यमाह। प्रमाणतोऽर्थप्रतिपत्तावित्यादि (१-६)तस्यानुसंधानवाक्यम्। तस्य शास्त्रस्य निःश्रेयसाधिगमेन सूत्रेण घटितस्य कुतश्चिन्निमित्ताद्विघटनाशङ्कायाम्। अनु सूत्रघटनायाः पश्चात्। संधानम्। घटनम्। अनुसंधानम्, तस्य वाक्यम् अनुसन्धानवाक्यमिति।

एवं किलात्र शङ्क्यते। यदशक्यानुष्ठानोपायोपदेशकं तदनर्थकं यथा ज्वरहरतक्षकचूडारत्नाहरणोपदेशकं वाक्यं, तादृशं चेदं शास्त्रमिति। तथा हि—प्रमेयादीनां तावत्पदार्थानां तत्त्वज्ञानं प्रमाणतत्त्वज्ञानाधीनम्। न हि प्रमाणं तत्त्वेनानवधारितं बोधकत्वमात्रेण स्वगोचरावधारणायालम्। तावन्मात्रस्य तदाभाससाधारण्यात्। अपि तु बोधकत्वैकार्थसमवेतेनाव्यभिचारित्वेन। तदेव हि प्रामाण्यं तच्चाशक्यावधारणम्। तदनवधारणाच्च प्रमेयादयो दुरवधारणाः। तथा हि विज्ञानस्य तावत्प्रामाण्यं स्वतो वा निश्चीयते परतो वा। न तावत्पूर्वः कल्पः। न खलु विज्ञानमनात्मसंवेदनमात्मानमपि गृह्णाति प्रागेव तत्प्रामाण्यम्। नापि विज्ञानान्तरम्। तद्विज्ञानमिसेव गृह्णीयान्न पुनरस्याव्यभिचारित्वम्। ज्ञानत्वमात्रं च तदाभा-

(१) वाक्याभावेऽपि—इति युक्तः पाठः।

ससाधारणमिति न स्वतः प्रामाण्यावधारणम् । एतेन स्वसंवेदननयेऽप्यव्यभिचारग्रहणं प्रत्युक्तम् । नापि परतः । परं हि तद्गोचरं वा ज्ञानमभ्युपेयेत अर्थक्रियानिर्भासं वा ज्ञानान्तरं तद्गोचरनान्तरीयकार्थान्तरदर्शनं वा ? तच्च सर्वं स्वतोऽनवधारितप्रामाण्यमाकुलं सत्कथं पूर्वं प्रवर्तकं ज्ञानमनाकुलयेत् । स्वतो वाऽस्य प्रामाण्ये किमपराद्धं प्रवर्त्तकज्ञानेन, येन तस्मिन्नपि तन्न स्यात् । न च प्रामाण्यं ज्ञायते स्वत इत्यावेदितम् । यदा च संवेदनप्रामाण्यमुक्तेन क्रमेण दुरधिगमं तदा कैव कथेन्द्रियादीनामव्यभिचारिसंवेदनकार्यव्यङ्ग्यप्रमाणभावानाम् । तदेवं दृष्टार्थाः प्राणभृद्व्यवहारा भवन्तु संदेहादपि यथा तथा, अदृष्टार्थास्तु बहुवित्तव्ययायाससाध्या वैदिका व्यवहारा दत्तजलाञ्जलयः प्रसक्ताः । तस्मात्प्रमाणादिपदार्थतत्त्वज्ञानद्वारेण न शास्त्रं निःश्रेयसेन संबध्यते इति सेयमाशङ्का प्रामाण्यज्ञानोपायकथनेन भाष्यकृता निराकृता । तथा हि । प्रमाणम् । अर्थवदिति । ( भा०१-१ ) नित्ययोगे मतुप् । नित्यता चाव्यभिचारिता । तेनार्थाव्यभिचारीत्यर्थः । इयमेव चार्थाव्यभिचारिता प्रमाणस्य यद्देशकालान्तरावस्थान्तराविसंवादोऽर्थस्वरूपप्रकारयोस्तदुपदर्शितयोः । अत्र हेतुः—प्रवृत्तिसामर्थ्यात् । समर्थप्रवृत्तिजनकत्वात् । यदि पुनरेतदर्थवन्नाभविष्यन्न समर्थां प्रवृत्तिमकरिष्यद् यथा प्रमाणाभास इति व्यतिरेकी हेतुः । अन्वयव्यतिरेकी वा । अनुमानस्य स्वतःप्रमाणतया ऽन्वयस्यापि संभवात् । प्रवृत्तिजनकत्वं तु प्रमाणस्य न साक्षात्, किं त्वर्थप्रतिपत्तिजननद्वारेणेत्याह । प्रमाणतोऽर्थप्रतिपत्ताविति । सर्वस्य चास्योपपत्तिं वार्तिकव्याख्यानावसरे निवेदयिष्यामः ।

स्यादेतत् । भवन्तु प्रमाणादयः शक्यज्ञानाः शास्त्रेण तु ते

नाभिधीयन्त इति न निःश्रेयसेन सङ्गतिः शास्त्रस्येत्यत आह । शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वात् । (वा० १-७) यद्यपि श्रेयो दुःखनिवृत्तिमात्यन्तिकीं वक्ष्यति तथा ऽपि सोपायैव साऽत्र श्रेयःशब्देन विवक्षिता तन्मात्रस्य शास्त्राविषयत्वात् । तदयमर्थः—शास्त्रं तावदेतत् पुरुषश्रेयोऽभिधत्ते सहोपायेनेत्यनुभवसिद्धं सदशक्यानुष्ठानतयाऽपवदितव्यम् । सा चेदशक्यानुष्ठानता ऽपनीता प्रमाणत इत्यादिना, संहितं निःश्रेयसेन सह शास्त्रमिति । शास्त्रस्येत्यादिग्रहणकवाक्यं विवृणोति । शास्त्रं पुनरित्यादिनोपभोगात्प्रक्षयेण इत्यन्तेन । प्रमाणादिवाचकपदग्रहणेन तल्लक्षणानि तत्परीक्षाश्चोपलक्षयति । तथा च पञ्चाध्यायी शास्त्रमित्युक्तमिसविरोधः पञ्चाध्यायी त्यनेन । व्यूहः । समूहिनामुचितानुपूर्वी । उपलक्षकपदस्वरूपमाह । पदं पुनरिति । एकस्मृतिसमारूढा वर्णा एकार्थप्रतिपादनावच्छिन्नाः समूहः । एवं स्वार्थस्मृत्यवान्तरव्यापाराणां सूत्रपदानां नानापदार्थविशिष्टैकार्थप्रत्ययैककार्यावच्छिन्नानां समूहो वेदितव्यः । एवं कचित्केनचिदर्थेनैकेन सूत्रवाक्यानामेकवाक्यत्वं समूहः प्रकरणम् । प्रकरणानामपि कया चित्स्वार्थसङ्गत्या समूहः आह्निकम् । एवं तत्र तत्र वेदितव्यम् । एताः प्रकरणाह्निकाध्यायार्थसंगतीस्तत्र तत्र लेशतो दर्शयिष्यामः ।

तदेवं शास्त्रस्वरूपं दर्शयित्वा नान्तरेण तदर्थकथनं पुरुषश्रेयोभिधायकत्वमस्य सिद्ध्यतीति तदर्थं कथयति । तत्पदार्था इति । (१-१०) ननु प्रमाणादीनां प्रतिनरमानन्त्येन दुर्ज्ञानत्वमिति तदवस्थमेवानर्थक्यं शास्त्रस्य प्रसक्तमित्यत आह । षोडशात्मानः । आत्मा स्वभावः प्रमाणादीनां प्रमाणत्वादिसामान्यविशेष इति यावत् । एतदुक्तं भवति—आन्तर्गणिक-

भेदादानन्त्येऽपि सामान्यविशेषैः संगृहीता न दुर्ज्ञाना इति यतोऽस्य पदार्थाः प्रमाणादयस्तत्त्वमाच्छास्त्रं पुरुषश्रेयोऽभिधत्ते ।

स्यादेतत्—प्रमाणादयः पदार्थाः प्रामाणिका अप्रामाणिका वा ? अप्रामाणिकत्वे कल्पनामात्रनिर्मिताः कथं निःश्रेयसाय कल्पन्त इति । न च षोडशात्मानः, कल्पनाकोषस्यानन्तप्रसरत्वात् । प्रामाणिकत्वे वा प्रमाणादेव तत्सिद्धेः शास्त्रस्य वैयर्थ्यमित्यत आह । प्रत्यक्षेति । प्रत्यक्षानुमानाधिगतग्रहणेनाप्रामाणिकत्वं निषिद्धम् । अत एव । वस्तुतत्त्वेति । प्रमाणादयः पदार्था नोपमानविषया इति नोपमानमुपन्यस्तम् । यद्यपि प्रमेयमात्माद्यपवर्गान्तलक्षणमागमिकं तथाऽप्यागमस्याप्तप्रणेतृकतया तत्रापि मूलभूतमनुमानं प्रत्यक्षं वाऽस्तीति प्रत्यक्षानुमाने एव दर्शिते । ननूक्तं प्रामाणिकत्वे शास्त्रवैयर्थ्यामित्यत आह । तस्य विषय इति । व्यवहरमाणाभावे प्रमाणैर्लौकिकवैनयिकबुद्धिविरहिणो नैतान्पदार्थान्विविञ्चते अविविक्ताश्चैते न निःश्रेयसाय कल्पन्त इत्यनधिगतेत्युक्तम् । आध्यात्मिकी शक्तिः शुश्रूषादिः । पुरुषेत्युक्तं तत्र विवक्षितं पुरुषविशेषं ग्रहीतुं संभाविनः पुरुषान्दर्शयति । पुरुषः पुनरिति । हेयं दर्शयति । तत्रेति । उपादेयानाह । इतर इति । अपेक्षा—जिज्ञासा । सा संदिग्धस्य तावदस्ति शिष्यस्य । विप्रतिपन्नस्य तु साक्षिणां पुरतो जल्पवितण्डाभ्यां शिष्यमाणस्य गलितेऽहंकारे संदिग्धस्य जातजिज्ञासस्य सापेक्षस्य सतः । अप्रतिपन्नस्यापि केन चित्प्रकारेण संदेहमापाद्य सापेक्षीकृतस्य प्रतिपाद्यता । तदिदमुक्तमितरे सापेक्षाः सन्तः प्रतिपाद्या इति । असन्दिग्धोऽपि तत्त्वप्रतिपादनाय कारुणिकेन संदिग्धः कृत्वा प्रतिपाद्यत इति । तत्किं सापेक्षम-

धिकृत्य शास्त्रं प्रवृत्तं तथा च प्रमातॄणां न प्रमाणान्तरे प्रवृत्तिः स्यादित्यत आह । ते यदेति । कंचिद्विषयं जिज्ञासवो यदेन्द्रियाद्यपेक्षन्ते तदा प्रत्यक्षेण प्रतिपाद्याः । एवमुत्तरमपि योज्यम् । अयमभिसंधिः—न दृष्टप्रयोजनोपयोगिजिज्ञासेहापेक्षा विवक्षिता किं तु निःश्रेयसोपयोगिपदार्थजिज्ञासा । सा चास्मिन्नेव शास्त्रे प्रवृत्तिहेतुर्नान्यत्र तदिदमुक्तम् । यदा पुनरिति । परमपुरुषार्थसाधनं तु जिज्ञासव इति शेषः । इहाभिमतं श्रेयो निर्द्धारयितुं श्रेयोमात्रप्रकारानाह । श्रेयः पुनः सुखमहितनिवृत्तिश्च । तच्छ्रेयः । सुखं दुःख-
( २–७ ) तत्राप्यवान्तरप्रकारानाह । निवृत्तिश्च । भिद्यमानं द्वेधा व्यवतिष्ठते । तदाह । दृष्टादृष्टभेदेन । न व्यासज्य किं तु प्रत्येकमित्याह । दृष्टं सुखं स्रक्चन्दनवनितादिभोगजन्म अदृष्टं च सुखं स्वर्गादि । एवं च दुःखनिवृत्तिरपि श्रेयो दृष्टमदृष्टं चेति योजनीयम् चकारलोपात् । अहितनिवृत्तेः श्रेयसः आत्यन्तिकत्वानात्यन्तिकत्वे तद्दृष्टादृष्टस्य भेदमाह । अहितनिवृत्तिरपीति । अभिमतं श्रेयो निर्द्धारयति । आत्यन्तिकीति । पुनरिति । निर्द्धारणमेव द्योतयति । आत्यन्तिकत्वं निवृत्तेर्निवृत्तस्य पुनरनुत्पादः । स च कार्यकारणतदनुषङ्गिनिवृत्त्या लक्ष्यते । न त्वकारणं कार्यं जायते तदिदमुक्तम् एकविंशतिप्रभेदाभिन्नदुःखहान्येति । गौणमुख्यभेदेन चैकविंशतेः शरीरादीनां दुःखत्वप्रकारानाह । एकविंशतीति । षष्ठमिन्द्रियं मनः । तस्य विषया इच्छाद्वेषप्रयत्नाः । यद्यपि विषयः शरीरमपि तथाऽपि अन्यथाऽस्य दुःखहेतुभाव इत्याह । शरीरमिति । शरीरावच्छिन्न आत्मप्रदेशो (१)दुःखायतनमिति शरीरं दुःखायतनमुक्तम् ।

(१) आत्मप्रदेशो इति २ पु० पा० ।

इन्द्रियविषयबुद्धीनां दुःखत्वोपचारे कारणमाह । इन्द्रियाणीति (२-१४)। तत्रेन्द्रियाणि तावद्गन्धादिविषयबोधनात्, विषया बोध्यत्वात्। बुद्धयस्तु साक्षात् दुःखसाधनानीति दुःखत्वेनोपचर्य्यन्ते। सुखे दुःखत्वोपचारे बीजमाह। सुखमिति। साधनपारतन्त्र्यं क्षयित्वं काम इति दुःखहेतवः सकलसुखानुषङ्गिणः। तस्मात्सुखमपि दुःखानुषङ्गि। उक्तप्रकारदुःखहानिसाधनमाह। तस्य हानिरिति। संशयादितत्त्वज्ञानपरिशोधितपरमन्यायमार्गः खलु हेयोपादेयभूतद्वादशविधप्रमेयतत्त्वपरिभावनभुवा प्रसंख्यानेन निर्मृष्टनिखिलप्रवृत्तिहेतुदोषानुषङ्गो ऽप्रवर्त्तमानो न शरीरेन्द्रियादिहेतुमपूर्वधर्माधर्मप्रचयमातनोति। अनादिभवपरम्परोपात्तं च धर्म्माधर्मप्रचयमनन्तमप्यनियतविपाकसमयमपि प्रसंख्यानपरिपाकप्रभावात्परितस्तदुपभोगभागिनः कायान्निर्माय तत्फलोपभोगात्प्रक्षिणोति। अचिन्त्यसामर्थ्यातिशयो हि समाधिः। यथाऽऽहुरत्रभवन्तः पतञ्जलिपादाः "को हि योगप्रभावादृते अगस्त्य इव समुद्रं पिबति स इव च दण्डकारण्यं सृजती" ति। सेयमात्यन्तिकी दुःखनिवृत्तिः श्रेयः, तदिदमुक्तं शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वादिति।

स्यादेतत्। केवलस्य दुःखस्यात्यन्तिकी निवृत्तिः श्रेयः पुरुषप्रवृत्त्यङ्गम्। इयं तु दुःखवत्सुखस्याप्यात्यन्तिकी निवृत्तिरिति कथं श्रेयः कथं च प्रेक्षावत्प्रवृत्त्यङ्गमित्यत आह। पुरुषा रागादिमन्त इति। (२-१७) यद्यपि रागादिमतां पृथग्जनानामेतन्न प्रवृत्त्यङ्गं, ते हि मधुविषसंपृक्तमप्यन्नं मधुमधुरतया आपातरमणीयं विषविषङ्गान्मारयतु मा वा मामिदमुपभुञ्जते तावदापाततः, सुखं को हि हस्तगतं पादगतं करोतीति विचिन्त्योपभुञ्जते। विवेकिनस्तु आयतिमालोचयन्तः स्वर्गमपि कुपितफणिफणामण्डल-

च्छायप्रतिमामित्यपजहाति। तेन मा भूदेतद्रागादिमतां प्रवृत्त्यङ्गं विवेकिनां तु भविष्यति। अविवेकिनामपि चाप्रतिपन्नविप्रतिपन्नानां विवेकाधानोपायः पूर्वमावेदितः। शास्त्रप्रवृत्त्यङ्गमात्रमेव चेह विवेको वैराग्यमभिमतमिति। प्रवृत्तेर्द्वैविध्यम्। ऐकरूप्यं द्वैरूप्यं च। पुरुषभेदो रागवैराग्याभ्याम्। प्राप्तव्यस्य सर्वस्य सुखस्य दुःखसंभेदेनानिष्टपक्षानिक्षेपादनिष्टप्रतिषेधार्थैव प्रवृत्तिर्विवेकिनामेकरूपैव। अविवेकिनां तु प्रवृत्तिर्द्विरूपेत्युक्तम्।

तदनेन प्रपञ्चेन प्रमाणतोऽर्थप्रतिपत्तावित्यादिवाक्यस्य तात्पर्यमभिधाय तदवयवं प्रवृत्तिसामर्थ्यादिति विवरीतुं भूमिमारचयति। प्रवृत्तेरपीति। दृष्टं प्रवृत्तिसामर्थ्यं हेतुरिति रागादिमत्प्रवृत्तिसामर्थ्यमुपन्यस्तं न तु वीतरागाणाम्। न हि तत्प्रवृत्तेर्निःश्रेयसाधिगमलक्षणफलसंबन्धो दृष्टो निःश्रेयसस्यालौकिकत्वात्। प्रमाणस्यार्थवदनर्थकत्वादिसयुक्तं प्रमाणमनर्थकमिति हि विप्रतिषिद्धमित्यत आह। प्रमाणं तावदिति(३-८)। न ह्यप्रमाणमप्रमाणमिति गृहीतं प्रवृत्त्यै कल्पते, किं तर्हि? प्रमाणमिति। न चाप्रमाणे प्रमाणमित्यभिमानो विना प्रमाणादिसाधर्म्यादिति तत्साधर्म्यं पृच्छति। किं पुनरिति। उत्तरं सामान्यपरिच्छेदकत्वम्। तद्विवृणोति। प्रमाणेनापीति। रजतादिज्ञानमपि पुरोवर्तिशुक्लभास्वरं सद् द्रव्यं परिच्छिनत्ति। शुक्तिज्ञानमपि, केवलमेकस्मिन्नेव विषये रजतसमारोपापवादाभ्यां बुद्ध्योर्बाध्यबाधकभाव इति भावः। तदेवमुभयतः प्रवृत्तिः। समर्था तु प्रमाणादेव नाप्रमाणादर्थव्यभिचारिण इत्याह। सोऽयं प्रमातेति। ततश्च सिद्धः समर्थायाः प्रवृत्तेरनर्थव्यतिरेक इत्यभिसंधिः। तथा च समर्था प्रवृत्तिरनर्थव्यतिरेकसंपन्ना प्रमाणस्यार्थवत्त्वे हेतुरित्याह। तस्याः। समर्थायाः। प्रवृत्तेर्हेतोः

पुनः प्रमाणस्यार्थवत्त्वमर्थाव्यभिचारित्वम् । असमर्था त्वनन्तराऽपि न संबध्यते योग्यताविरहात् ।

समत्यादिवाक्यमाक्षेप्तुमनुवदति । प्रमाणत इति (३–१४) आक्षिपति परस्परेति । समाधत्ते । नेति । आक्षेपवाक्यं विभजते । यदि प्रमाणत इति । न तावदर्थप्रतिपत्तिः प्रवृत्तिहेतुरपि तु तद्विनिश्चयः । न च तन्मात्रम्, अपि तु तदर्थजातीयस्य श्रेयोहेतुतयाऽसकृदुपलभ्यमानस्यार्थस्य तज्जातीयतया श्रेयोहेतुभावानुमानसहिता विनिश्चितिः प्रवृत्तिहेतुः । सेयं श्रेयःसाधनतानुमानसहिता प्रमाणतोऽर्थप्रतिपत्तिः विनिश्चितिः समर्थप्रवृत्तिनिमित्तमुक्ता । न चार्थविनिश्चयः प्रामाण्यावधारणमन्तरेण । प्रामाण्यावधारणं च श्रेयोहेतुतानुमाननिमित्तव्याप्तिग्रहणं च न समर्थप्रवृत्तिं विना । न च समर्था प्रवृत्तिस्ताभ्यां विनेति परस्पराश्रयता तदिदमुक्तं यदि पूर्वं प्रमाणतोऽर्थप्रतिपत्तिर्विनिश्चितिरपेक्षिताऽनुमानसहिता प्रवृत्तिसामर्थ्यमन्तरेण किमिति प्रतिपद्यते निश्चिनोति ( नोपाय=एवेति तोयमेव चेति (१) । ) समाधानं विभजते । तच्च नैवमिति ।

यत्तावदुक्तं प्रामाण्यस्य दुरवधारणत्वादर्थविनिश्चयाभावान्न प्रवृत्तिसामर्थ्यमिति । तत्र ब्रूमः, सत्यं न स्वतः प्रामाण्यं शक्यावधारणं, परतस्तु दृष्टार्थेष्वनभ्यासदशापन्नेषु प्रवृत्तिसामर्थ्यादेव तद्गम्यते । अर्थप्रतीत्यधीना तु प्रवृत्तिर्नार्थावधारणाधीना । अर्थसंदेहादपि प्रेक्षावतां प्रवृत्तेः । नो खलूपायताविनिश्चयेनापि प्रवर्तमाना अनागतफले न संदिहते । तदमी संदिहाना अपि प्रवर्त्तमानाः प्रवृत्तिसामर्थ्यात्प्रमाणस्य तत्त्वं विनि-

(१) अस्य स्थाने अपेक्षितो अयमेव चाति २ पु० पा० ।
अपेक्षितोपाय एवेति तोयमेवेति ३ पु० पा० ।

श्चित्र तज्जातीयस्यान्यस्याभ्यासदशापन्नस्य प्रवृत्तिसामर्थ्यात्प्रागेव तज्जातीयत्वेन लिङ्गेन प्रामाण्यावधारणादर्थाविनिश्चयेन प्रवर्त्तन्ते। एवं च दृष्टार्थमन्त्रायुर्वेदप्रामाण्यं प्रवृत्तिसामर्थ्येनावधार्य्य तज्जातीयस्यादृष्टार्थस्य वेदस्य विना ऽपि प्रवृत्तिसामर्थ्यं प्रामाण्यावधारणमाप्तोक्तत्वेन निवेदयिष्यते।

न च फलज्ञानं परीक्ष्यते प्रेक्षावद्भिः, तस्य यादृशतादृशस्यापीष्टत्वादिष्टलक्षणत्वाच्च फलस्य। तत्साधनत्वं ते परीक्षन्ते। तथा हि तोयज्ञानं पिपासोस्तेन तत्र प्रवृत्तिः प्रवृत्तस्य तदाप्तिः आप्तस्य पानं पानेन चोदन्योपशान्तिरित्येतावतैव प्रमाता कृती भवति न पुनरुदन्योपशान्तिमपि परीक्षते तस्य यादृशतादृशस्यापीष्टत्वादिति केचित्। वयं तु ब्रूमः। फलज्ञानमप्यभ्यासदशापन्नतया तज्जातीयत्वेन लिङ्गेनावधारिताव्यभिचारमेव। एवं तत्पूर्वं तत्पूर्वतरं तत्पूर्वतममिति। न च संप्रतितनस्य फलज्ञानस्य प्रामाण्यावधारणायेदानीमेव पूर्वस्य फलज्ञानस्य तज्जातीयत्वेन प्रामाण्यावधारणे सत्यनवस्थेति वाच्यम्। पूर्वतरसाधर्म्येण पूर्वस्य पूर्वमेवावधृतप्रमाणत्वात्। एवं पूर्वतमसाधर्म्येण पूर्वतरस्य एवं तत्पूर्वसाधर्म्येण पूर्वतमस्येत्यनादितैवात्र परिहारः। एतेषु च मध्ये यत्फलज्ञानं स्वप्नाद्युपभोगतुल्यतया शङ्कितव्यभिचारं तदनभ्यासदशापन्नमतः प्रवृत्तिसामर्थ्यं तत्र प्रामाण्यावधारणाय निवेशनीयमित्यर्थप्रतिपत्तिप्रवृत्तिसामर्थ्ययोरनादित्वमुक्तम्। अनुमानस्य तु प्रवृत्तिसामर्थ्यलिङ्गजन्मनोऽन्यस्य वा निरस्तसमस्तव्यभिचारशङ्कस्य स्वत एव प्रामाण्यमनुमेयाव्यभिचारिलिङ्गसमुत्थत्वात्। न हि लिङ्गाकारं ज्ञानं लिङ्गं विना, न च लिङ्गं लिङ्गिनं विनेति। अत एव गृहीताव्यभिचारलिङ्गसमुत्थं निष्कम्पमुत्पद्यते ज्ञानम्। प्रत्यक्षज्ञानमर्थादु-

त्पद्यमानमपि न गृहीताव्यभिचारादपि तु सत्तामात्रेणावस्थि-
तात् । न च कारणान्तराण्यपीन्द्रियादीनि अस्यार्थेन गृहीता-
व्यभिचाराणि न वा ऽर्थेनाव्यभिचाराणि । शाब्दं तु ज्ञानं
नार्थादुत्पद्यते तदभावे सति शब्दे भावात् । नापि लिङ्गस्येव
शब्दस्यार्थाव्यभिचारः किं तु सङ्केतग्रहणमात्रात्पदार्थप्रत्यायनेन
वाक्यार्थमवगमयति शब्दः । तस्मात्प्रत्यक्षशब्दविज्ञानयोर्न स्व-
तो ऽव्यभिचारग्रह इति प्रवृत्तिसामर्थ्यं तज्जातीयत्वं वा लिङ्ग-
मर्थाव्यभिचारायानुसरणीयं ज्ञानगततज्जातीयत्वलिङ्गग्राहिण-
श्च ज्ञानस्य मानसप्रत्यक्षस्य तादृशस्यादृष्टव्यभिचारतया परि-
तो निरस्तसमस्तविभ्रमाशङ्कस्य स्वतः प्रामाण्यमिति नानव-
स्था । एतेनोपमानं व्याख्यातम् । संवेदनस्य चार्थाव्यभिचारि-
ताकथनेन तत्करणानामिन्द्रियादीनामपि प्रमाणत्वमुक्तं वेदित-
व्यम् । न ह्यव्यभिचारिज्ञानजनकत्वादन्यत्प्रामाण्यम् । न चा-
र्थाव्यभिचारिणामिन्द्रियादीनां कथमर्थाव्यभिचारिज्ञानजनक-
त्वमिति सांप्रतम् । कारणस्वभावनियोगपर्यनुयोगयोरशक्य-
त्वात् । तस्मादर्थसंदेहादनभ्यासदशापन्नात्प्रवृत्तौ प्रमाणतो
ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यसंभवात्प्रवृत्तिसामर्थ्यज्ञानस्य चा-
भ्यासदशापन्नस्य तज्जातीयत्वेन प्रामाण्यानुमानादनभ्यासद-
शापन्नस्य तु प्रवृत्तिसामर्थ्या(न)न्तरज्ञानेन प्रामाण्यानुमानादना-
दित्वान्नार्थप्रतिपत्तिप्रवृत्तिसामर्थ्ययोः परस्पराश्रयत्वमस्तीति ।
अर्थस्यापेक्षितोपायतानुमानप्रवृत्तिसामर्थ्ययोः परस्परापेक्षित्वम-
वशिष्यते । तत्राप्यनादिता परिहारः । उत्पन्नमात्रस्य हि बाल-
कस्य स्तनं दृष्ट्वा प्राग्भवीयस्तज्जातीयापेक्षितानुभवजनितः सं-
स्कार आविरस्ति ततश्च स्मरणं ततो ऽपेक्षितोपायतानुमानं
ततः प्रवृत्तिस्ततः तस्याः सामर्थ्यम् । एवं पूर्वस्मिन् पूर्वस्मिञ्ज-

न्मनीत्यनादितया न बीजाङ्कुरवत्परस्परापेक्षितेति । अर्थप्रतिपत्तिरिति । अर्थस्यापेक्षितोपायताप्रतिपत्तिश्चेत्यर्थः । तस्मात्सर्वमवदातम् ।

तदनेनोक्तप्रक्रमेण प्रमाणतो ऽर्थप्रतिपत्तावित्यस्य शास्त्रानुसंधानवाक्यत्वं तात्पर्यं च समाहितम् । इदानीमस्यैव तात्पर्य(१)माह । प्रामाण्यप्रवृत्त्योर्वेति । अत्रेदमाशङ्क्यते । मुनिर्हि प्रत्यक्षसंशयादिव्युत्पादनद्वारेण साक्षाच्चानेन शास्त्रेणान्वीक्षिकया हेयोपादेयभावावस्थितद्वादशविधप्रमेयव्युत्पादकन्यायमनुमानापरनामानं निःश्रेयससिद्धये व्युत्पादयांबभूव । न च न्यायतः प्रमाणात्प्रमेयतत्त्वनिश्चयमात्रान्निःश्रेयसाधिगमो ऽपि तु आद्यन्तवर्जानां दशानां प्रमेयाणां दुःखसंज्ञाभावनम् आत्मनश्च याथात्म्यभावनमित्यादिभ्यः (२)प्रवृत्तिभिः आत्मतत्त्वसाक्षात्कारवैराग्यपरिपाकक्रमेणापूर्वयोर्द्धर्माधर्मयोरनुत्पादेनोत्पन्नयोश्चोपभोगात्प्रक्षयेणेति । तथा च निःश्रेयसप्राप्तेः कारणत्वात्प्रमाणान्न्यायात्प्रवृत्तिरेव बलीयसी न न्यायः । तस्मात्प्रवृत्तिरेव व्युत्पादनीया न न्यायो निःश्रेयसहेतुरपि प्रवृत्तेरन्तरङ्गत्वादिति । तत्रेदमुपतिष्ठते प्रमाणतो ऽर्थप्रतिपत्तौ सत्यां प्रवृत्तेः सामर्थ्यं फलेनाभिसंबन्धो न तु प्रमाणतो ऽसत्यामर्थप्रतिपत्तौ । तस्मादर्थवत्प्रयोजनवत्प्रमाणमपि प्रवृत्तिवदेव । एतदुक्तं भवति । यथाऽन्तरङ्गतया प्रवृत्तिर्बलीयसी एवं मूलकारणतया प्रमाणमपि । न त्वप्रमाणात्प्रवृत्तिः फलेनाभिसंबध्यते किं तु प्रमाणात् । तस्मात्तुल्यमुभयमपि । तथा ऽपि प्रमाणव्युत्पादनेन प्रवृत्तिरपि व्युत्पादिता भवतीति प्रमाणस्य व्युत्पादनमेवाकारि

(१) तात्पर्यान्तरमाह–इति वर्द्धमानसम्मतः पाठः ।
(२) इत्यादिभिः इति उचितः पाठः ।

शास्त्रे न तु प्रवृत्तेः। सामान्याभिधानं परमन्यायपरं तस्यैव प्रकृतत्वादिति।

प्रामाण्यज्ञानोपायप्रतिपादनपरतया ऽनुसंधानवाक्यत्वमस्य पूर्वमुक्तं संप्रति परपर्यनुयोगमुखेनानुसंधानवाक्यत्वं प्रतिपादयति। लोकवृत्तेति। तथा हि प्रमाणप्रवृत्त्युपायं प्रत्याचक्षाण एवं प्रष्टव्यो जायते किं भवान्प्रमाणेन प्रमाणज्ञानोपायं प्रत्याचष्टे अप्रमाणेन वा। यदि ब्रूयात्प्रमाणेनेति स प्रतिवक्तव्यः प्रमाणज्ञानोपायमविद्वान्कथं भवानेवमाहेति। अप्रमाणेनेति चेत्। अनुज्ञया वर्तितव्यम्। अथ प्रमाणेनागृहीतप्रामाण्येनेति। वाङ्मनसयोर्विसंवादः। तस्मादनिच्छता ऽपि त्वया लोकवृत्तमनुसरणीयम्। अन्यथा न लौकिको न परीक्षक उन्मत्तवदुपेक्षणीयः स्याद् इति। तदिदं लोकवृत्तमाक्षेप्तारं बोधयितुमनेन भाष्येणानूद्यते प्रमाणतो ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणं (भा० १-१)यतो ऽतः सर्वः प्रमाता प्रमाणेनावगतार्थवत्त्वेनार्थमवधार्य प्रवर्तमानः फलमुपलभत इति, लोकवृत्तं, तत्प्रमाणत इत्यादिना वाक्येन कारणप्रदर्शनद्वारेणानूद्यते।

अस्यैव भाष्यस्य तात्पर्यान्तरं वक्तुं भूमिमारचयति। हेयहानेति(४-९)। अर्थोऽर्थशब्दः प्रमाणतोऽर्थप्रतिपत्तावित्यत्र स्थितः पदं वाचकं येषां तानि तथा। एतद्वार्तिकग्रन्थस्यैतादृशं व्याख्यानं भाष्यगतस्य त्वन्यथा भविष्यति। उपायः शास्त्रमिति। शास्त्रशब्दस्तदर्थपरः अर्थस्यापि शब्दवच्छास्त्रशरीरत्वात्। अत्र च हेयहानाधिगन्तव्यपदैः प्रमाणप्रमेययोरुपादानाद्गोबलीवर्दन्यायेन संशयादिषु निग्रहस्थानान्तेषु शास्त्रपदं प्रवर्तते। तेनोपायपदेन संशयादयो निग्रहस्थानान्ता एवोक्ता इति। ग्रहणकवाक्यं विवृणोति। हेयमिति। तात्पर्यमाह। एतस्मिंश्चे-

ति । येन प्रमाणप्रमाप्रमेयप्रमातृरूपं चतुर्वर्गान्तरमपि सूचयति । तत्र हेयादिचतुर्वर्गे, अर्थ्यमानतयाऽर्थपदसूचिते प्रमाणादिचतुर्वर्गे च प्रमाणस्य प्राधान्यप्रदर्शनार्थमिदं भाष्यम् । यद्यपि चतुर्वर्गद्वयतत्त्वावगमो निःश्रेयसाधिगमहेतुस्तथाऽपि प्रमाणमेव प्रधानम्, तन्मूलत्वादितरसिद्धेः । तदिदमुक्तमर्थवदिति । अतिशायने मतुप् । हेयाद्यपेक्षया प्रमात्राद्यपेक्षया चातिशयेन प्रयोजनवत्प्रमाणम् । कस्मात् ? प्रमाणतोऽर्थप्रतिपत्तौ सत्यां प्रवृत्तस्य प्रमातुस्तदितरप्रतिलम्भात् । प्रमायाश्च तत्कार्यत्वात् । तदिदमुक्तं प्रवृत्तिसामर्थ्यादिति । तदेतस्मात्प्राधान्याद्विवक्षाभेदेन त्रिवर्गद्वयात्प्रागुद्देशः प्रमाणस्येति । एतेन यदाहुरेके यदि प्राधान्यात्प्राथम्यं तत् प्रमेयस्यैव । अथोपायत्वात्ततः संशयादीनाम्, तेषां प्रमाणोपायत्वात् । कस्मात्प्रमात्रादिभ्यः प्राथम्यं प्रमाणस्येति तन्निरस्तम् । प्रमाणोपायानामपि संशयादीनां प्रमाणाधीनत्वादिति । नन्ववगतमर्थपदतया हेयादिचतुर्वर्गो दर्शित इति । प्रमाणादिचतुर्वर्गस्तु कथं प्रदर्श्यत इति पृच्छति । कथं पुनरिति । उत्तरं प्रमाणप्रमेयाधिगतय इति ।

तदेवन्तात्पर्यं व्याख्याय अवयवार्थं व्याख्यातुमुपक्रमते । व्याख्यातादिदं वाक्यमवयवश उपन्यस्य वर्ण्यते(४।१३) । व्याख्यायेत अवयवश इति । तत्रावयवेषु व्याख्यातव्येषु प्राथम्यात्प्रमाणत इति विवृणोति । तत्रेति । विभजते । प्रमाणत इति । इयं निमित्तपञ्चमी चेत् कस्मात्प्रमाणादिति नाभिहितमित्यत आह । अस्य—प्रमाणत इत्येवंभूतस्याभिधानं वचनव्याप्त्यर्थं विभक्तिव्याप्त्यर्थं च । वचनव्याप्त्यर्थमिति मृष्यामहे न तु विभक्तिव्याप्त्यर्थमिति पञ्चमीव्यतिरेकेण तसेरभावादित्याह । कथं पुनरिति । परिहरति । लभ्यत इति । व्याप्तेः प्रयोजनं

पृच्छति। किं सिद्धमिति। उत्तरं वचनव्याप्त्या संप्लवो व्यवस्था च। तदुभयं विभजते। प्रमाणेनेति। यत्र द्वयोर्बहूनां च संप्लवः प्रमाणानां तत्रैकस्याप्यस्ति प्रतिपत्तिसाधनत्वं प्रमाणस्येति कथयितुं संप्लवावसरेऽपि प्रमाणेनेत्युक्तम्। अत एव व्यवस्थायामेवकारः प्रमाणेनैवेति। विभक्तिव्याप्तेः प्रयोजनमाह। विभक्तिव्याप्त्या हेतुकरणभावः(४-१९)। अवगम्यत इत्यनुषज्यते। तद्विभजते। प्रमाणादर्थाधिगतिर्भवतीति हेतुत्वं गम्यते। प्रमाणेनार्थाधिगतिर्भवतीति करणरूपार्थो गम्यत इति सम्बन्धः। कस्मात्पुनः करणार्थो गम्यत इयत आह। प्रमाणेनेति। अर्थमर्थाधिगतिं साधयतीति साधकतमत्वात्। अत्र च करणभावनान्तरीयकस्य हेतुभावस्य पञ्चम्या अभिधानं प्रमाणफलयोस्तादात्म्यप्रतिषेधार्थं, भेदाधिष्ठानत्वाद्धेतुफलभावस्य, न खलु परशुरेव च्छिदेति। प्रमाणप्रातिपदिकलब्धकरणत्वानुवादश्च प्रमाकारकान्तरेभ्यो ऽभ्यर्हितत्वेनास्य व्युत्पाद्यत्वं च प्राथम्यं च युक्तमिति दर्शयितुम्।

संप्लवमाक्षिपति। संप्लवेति। समाधत्ते। नेति। आक्षेपं विभजते। स्यान्मतिरिति। विशिष्टो भिन्नो विषयो येषां तानि तथा, बहुवचनमान्तर्गणिकभेदाभिप्रायम्। अर्थसामर्थ्यसमुत्थं हि प्रत्यक्षमर्थगोचरम्। स एव चार्थः प्रत्यक्षगोचरो यो ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकावनुकारयति। न च सामान्यं निरस्तसमस्तार्थक्रियासामर्थ्यमेवं भवितुमर्हति। स्वलक्षणं तु स्यात् तदेव परमार्थसत्। अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः। एतदेवास्य स्वमसाधारणं लक्षणं यद्देशतो ऽननुगमनादेशात्मकस्य परमार्थत्वं कालतो ऽननुगमेन च क्षणिकत्वम्। तस्मात्स्वलक्षणविषयं प्रत्यक्षम्।

न च स्वलक्षणमनुमानस्यापि गोचरः। तद्धि गृहीतप्रतिबन्धलिङ्गहेतुकं, प्रतिबन्धश्च तादात्म्यतदुत्पत्तिलक्षणः स्वलक्षणविषयोऽशक्यग्रह इति सामान्यधर्मावाश्रयते। न च सामान्यमेकमनेकदेशकालावस्थासंसर्गि भवितुमर्हति। तदिदमनादिवासनोद्भूतविकल्पाधिष्ठानं विकल्पाकारस्य वा ऽलीकस्य बाह्यत्व(१)-मनुमानगोचरोऽभ्युपेयम्। तच्च भावाभावसाधारण्याद्बाह्यसादृश्यान्नियतप्रतिभासत्वाच्चान्यव्यावृत्तिनिष्ठम्। यत्खलु भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठमेव यथा ऽमूर्त्तत्वम्। तद्धि(२) ज्ञानादौ भावे शशविषाणादौ चाभावे साधारणम्। भावाभावसाधारणश्च विकल्पगोचरो ऽस्ति घटोऽस्ति नास्ति घट इति। यदि पुनरसाधारणो भावो भवेदस्तिशब्दो न युज्येत पुनरुक्तत्वात्। नास्तीत्यपि न वक्तव्यं विरोधात्। एवमभावासाधारण्ये ऽपि वाच्यम्। न चालीकस्य सर्वसामर्थ्यविरहिणः परमार्थसता स्वलक्षणेन सादृश्यं मन्यते ऽन्यव्यावृत्तेः। न च गौरिति नियतौ बुद्धिव्यपदेशौ विना ऽश्वादिव्यावृत्तिम्, तस्मात्सामान्यमन्यव्यावृत्तिरूपमबाह्यं बाह्यभेदाग्रहाद्बाह्यत्वेनावगाह्यमानम(३)नुमानं बाह्ये प्रवर्त्तयति। पारंपर्येण च बाह्यप्रतिबन्धाद्बाह्यं प्रापयत्संवादकं सद् भ्रान्तमपि प्रमात्राशयवशात्प्रमाणम्। तदस्य न स्वलक्षणं गोचरः। प्रत्यक्षमपि न सामान्यगोचरमित्यावेदितम्। न चाभ्यामन्यत्प्रमाणमस्ति। प्रमाणस्य सतो ऽत्रैवान्तर्भावात्। अनन्तर्भावे वा प्रमाणत्वानुपपत्तेः। न च सामान्यविशेषाभ्यामन्यदस्ति प्रमेयान्तरं यत्रैते तत्संप्लोष्येते इत्यर्थः। समाधानवा-

---

(१) अलीकस्य वा स्वमिति का० मु० पा०।

(२) तद्धिज्ञानादाविति का० मु० पा०।

(३) अवगाहनादिति पु० पा०।

कथं विवृणोति। एतच्च नेति। (९-१) यथा चैतत्तथा तत्र निवेदयिष्यते। विशेषो व्यवच्छेदकः स च वक्रकोटरादिरन्त्यश्च। व्यवस्थासंकरोदाहरणान्याह। इन्द्रियवदिति।

संप्लवमपृष्यमाण आह। अधिगतत्वादिति। समाधत्ते। नान्यथेति। आक्षेपं विभजते। यदीति। स्यादेतत्—नास्ति वैयर्थ्यमधिगतीनामाशुतरविनाशितया तद्गोचराधिगत्यन्तरोत्पादं प्रति प्रमाणान्तरस्यार्थवत्त्वादित्यत आह। अधिगतं चार्थमधिगमयता प्रमाणेनेति। यद्यप्याधिगतय आशुतरविनाशिन्यस्तथाऽप्येकतरप्रमाणजनिताऽधिगातिलघुजन्मनः संस्कारादेव स्थायिनस्तदर्थस्मृतिसंभवादधिगतमर्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यात्। समाधिवाक्यं विवरीतुमनुवदति। नान्यथेति। विवृणोति। न ब्रूम इति। (५-१०) अयमभिसंधिः। न हि प्रमाणकारणानि प्रेक्षावन्ति येनैवमालोचयेयुः यज्जानितमेव चास्मासु केन चित्प्रमाणं वयमिहोदास्महे इति। नापि स्वकारणलब्धजन्मानि प्रमाणानि दर्शितो ऽयमर्थो ऽन्यतमेन चास्मासु प्रमाणेन कृतमस्माभिरिति विरन्तुमर्हन्ति। प्रमातुश्चेतनत्वादयमनुयोग इति चेद् न। प्रियस्य वस्तुनो ऽनेन भूयो भूयः प्रमित्सितत्वात्। अप्रमित्सितस्यापि च दुर्जनवचनादेः प्रमेयस्यानेन प्रमीयमाणत्वात्। तस्मान्न प्रमात्रभिसंधानात्प्रमाणस्य प्रवृत्तिरप्रवृत्तिर्वा ऽर्थे, किं तु सामर्थ्याद्, अन्यथा ऽग्निदाहादिदुःखस्याप्रत्यक्षत्वप्रसङ्गः। यत्तु प्रमाणं प्रमित्साधीनप्रवृत्ति तद्यदि प्रमाता न व्यापारयेत् किमायातं प्रमाणस्य, न हि तोयमपि पिपासुना न पीयत इति तस्य पिपासोपशमशक्तिरपैति। तस्मात्प्रत्युत्पन्नकारणसामग्रीजनिता (१)बुद्धिः प्रमा त-

(१) प्रत्यक्षसामग्रीजनिता—इति पाठान्तरम्।

ज्जनकानि च प्रमाणानि समानविषयाण्यपि । स एव चानेन सामग्रीभेदः प्रदर्शितो ऽन्यथा तु प्रत्यक्षेणेत्यादिना । यद्यपि साक्षात्कारासाक्षात्कारादिरपि प्रकारभेदोऽस्ति तथा ऽप्यसौ प्रकृतानुपयोगान्नोक्तः । यदि च द्रव्यं त्वचा गृहीतमिति कृतं चक्षुषा, चक्षुषा वा गृहीतमिति कृतं त्वचेत्युच्येत, न रूपविज्ञानं स्पर्शविज्ञानं वोपजायेत । तदर्थं चक्षुः त्वक्चाभ्युपेते । तथा च संप्लववैयर्थ्ये ऽपि व्यवस्थायां न वैयर्थ्यमित्याह । विषयान्तर इति । (५-१३) प्रकृतमुपसंहरति । तस्मादिति ।

विभक्त्यर्थं निरूप्य प्रातिपदिकार्थनिरूपणमवतारयति । प्रमाणेति । अवधार्यते ऽनेनेत्यवधारणं विचार इति । विचारणाय भावभवितारौ पृच्छति । किं पुनरिति । केचिदाहुरनधिगतार्थगन्तृ प्रमाणमिति । विषयसारूप्यं साकारस्य विज्ञानस्येत्यन्ये । विज्ञानस्यैवानाकारस्यात्मानात्मप्रकाशनसामर्थ्यमित्यपरे । उपलब्धिसाधनमिति वृद्धाः । तस्माद्विप्रतिपत्तेः संशयात्प्रश्नः । भावप्रश्नव्याख्यानेन भवितृप्रश्नो व्याख्यातः । उत्तरम् । उपलब्धिहेतुः प्रमाणम् । (५-१७) न च संशयविपर्यासरूपोपलब्धिकारणयोः प्रसङ्गः अर्थवदित्यधिकारात् । तयोश्चोपदर्शितार्थव्यभिचारेणानर्थकत्वात् । नो खलु विकल्प्यमानं वस्त्वस्ति अर्थक्रियासु वोपयुज्यते । स्यादेतत् स्मृतिहेतोरपि प्रामाण्यप्रसङ्गः । न ह्यसौ नोपलब्धिहेतुः । न चार्थसहकारि प्रमाणमिति सांप्रतम् । नदीपूरस्य पिपीलिकाण्डसंचरणस्य चातीतानागतवर्षलिङ्गस्य शब्दस्यातीतानागतगोचरस्यार्थसहकारिताविरहिणो ऽप्रमाणत्वप्रसङ्गात् । ज्ञापकत्वेन कार्यत्वेन वा कथंचिदर्थसम्बन्धे सं-

स्कारस्यापि तत्समानमिति तस्यापि स्मृतिरूपोपलब्धिहेतोः प्रामाण्यं प्रसक्तम्। मैवम्। प्रमाणशब्देन तस्यापास्तत्वात्। प्रमासाधनं हि प्रमाणं, न च स्मृतिः प्रमा, लोकाधीनावधारणो हि शब्दार्थसम्बन्धः। लोकश्च संस्कारमात्रजन्मनः स्मृतेरन्यामुपलब्धिमर्थाव्यभिचारिणीं प्रमामाचष्टे तस्मात्तद्धेतुः प्रमाणमिति न स्मृतिहेतौ प्रसङ्गः। अनधिगतार्थगन्तृत्वं च धारावाहिकविज्ञानानामधिगतार्थगोचराणां लोकसिद्धप्रमाणभावानां प्रामाण्यं विहन्तीति नाद्रियामहे। न च कालभेदेनानधिगतगोचरत्वं धारावाहिकानामिति युक्तम्। परमसूक्ष्माणां कालकलादिभेदानां पिशितलोचनैरस्मादृशैरनाकलनात्। न चाद्येनैव विज्ञानेनोपदर्शितत्वादर्थस्य प्रवर्त्तितत्वात्पुरुषस्य प्रापितत्वाच्चोत्तरेषामप्रामाण्यमेव ज्ञानानामिति वाच्यम्। न हि विज्ञानस्यार्थप्रापणं प्रवर्तनादन्यद्, न च प्रवर्तनमर्थप्रदर्शनादन्यत्। तस्मादर्थप्रदर्शनमात्रव्यापारमेव ज्ञानं प्रवर्त्तकं प्रापकं च। प्रदर्शनं च पूर्ववदुत्तरेषामपि विज्ञानानामभिन्नमिति कथं पूर्वमेव प्रमाणं नोत्तराण्यपि। पुरुषापेक्षया तु प्रामाण्ये चन्द्रतारकादिविज्ञानस्य पुरुषानपेक्षितस्याप्रामाण्यप्रसङ्गः। न चातिदवीयस्तया तदर्थस्य हेयतया तदपि पुरुषस्यापेक्षितं तस्योपेक्षणीयविषयत्वात्। न चोपेक्षणीयमप्यनुपादेयत्वाद्धेयमिति निवेदयिष्यते। उपलब्धिहेतुं च प्रमाणं वदता अनधिगतार्थगन्तृत्वं च सारूप्यं चात्मानात्मप्रकाशनशक्तिश्च प्रमाणमिति निरस्तानि भवन्ति। उपलब्धिमात्रस्यार्थाव्यभिचारिणः स्मृतेरन्यस्य प्रमाशब्देनाभिधानात्। हेतुग्रहेण सारूप्यशक्त्योः फलादभिन्नयोरपाकरणात् हेतुहेतुमद्भावस्य तादात्म्ये ऽनुपपत्तेरिति।

उपलब्धिहेतुत्वं च प्रमाणत्वम्। भवितृव्याख्यानेन भा-

वो व्याख्यातः। तदेवं ज्ञानमज्ञानं वा उपलब्धिहेतुः प्रमाणं तस्य च भावस्तत्त्वमिति स्थितम्। तदेतदतिव्यापकत्वेनाक्षिपति। समानत्वादिति। (५-१८) समाधत्ते अयं विशेष इति। अयमर्थः। सर्वःकर्त्ता करणगोचरव्यापारो न साक्षात्फले व्याप्रियते। करणं च द्विधा सिद्धमसिद्धं, परश्वादि दारुद्वैधीभावायोद्यम्योद्यम्य दारुणि पातयन् दारु च्छिनत्तीत्युच्यते, न तु साक्षात्कर्तृव्यापारगोचरो दारुद्वैधीभावः किं तु स्पर्शवद्वेगवतः करणीभूतस्य परशोः संयोगस्योद्यमननिपातनलक्षणस्तु कर्तृव्यापारः परशुगोचर एव। एवं स्वर्गकामोऽपि कर्त्ता न साक्षात्स्वर्गे व्याप्रियते किं तु तत्करणं यागमसिद्धं साधयति। स्वर्गस्तु यागव्यापारादेवापूर्वाभिधानाच्चेतनाश्रयाद्देशकालावस्थाभेदासादितपरिणतिविशेषात्साक्षादुत्पद्यते, तद्वदिहापि सिद्धमिन्द्रियादि असिद्धं च तत्संनिकर्षादि व्यापारयन्नुत्पादयन्करण एव चरितार्थः। करणं त्विन्द्रियादि तत्संनिकर्षादि वा नान्यत्र चरितार्थमिति साक्षादुपलब्धावेव फले व्याप्रियते। प्रमेयस्य तु प्रत्यक्षादन्यत्रोपलब्धिहेतुभाव एव नास्ति केवलं प्रमाणविषयभावमात्रेणोपयुज्यते। यत्राप्यस्य हेतुभावः प्रत्यक्षेऽभिप्रेयते तत्रापीन्द्रियसंबन्धमात्र उपयुज्यते प्रमेयम्। इन्द्रियमेव तत्तत्संनिकर्षादिना साक्षात्प्रमाहेतुः। तत्सिद्धमेतन्न प्रमाता साक्षात्प्रमाहेतुः कर्तृत्वात्। यो यः कर्त्ता स सर्वो न साक्षात्फलहेतुः यथा व्रश्चनः। यथा वा यजमानादिस्तथा चैतत् तस्मात्तथा। तथा प्रत्यक्षं प्रमेयं न साक्षात्प्रमाहेतुः प्रमेयत्वात्। यद्यत्प्रमेयं तत्तत्सर्वं न साक्षात्प्रमाहेतुः अनुमेयादिवत् तथा चैतत्तस्मात्तथा। तदिदं प्रमातृप्रमेययोः प्रमाणे चरितार्थत्वमचरितार्थत्वं प्रमाणस्य, तस्मात्तदेव फलहेतुः। प्रमातृप्रमेये तु फलोद्देशेन

सम् , प्रत्यक्षसूत्रे यत इत्यध्याहारात् । तस्मादिहापि स्वकारण-विशेषकं स्मृतेरन्यद्विज्ञानमधिकृतम् । न च संस्कारः प्रत्यक्षपूर्वोऽपि तादृशज्ञानकारणमिति न तस्य प्रसङ्ग इत्यर्थः । निर्णयेऽनुपजनितफले प्रसङ्गं निवारयति । निर्णय इति । विभागसूत्राक्षिप्तप्रमाणसामान्यलक्षणपूर्वकं विशेषप्रमाणलक्षणं तदपेक्षं प्रवर्तमानं नानुपजनितफलेऽप्रमाणे निर्णयमात्रे प्रवर्त्तितुमर्हति, जनितफलस्तु निर्णयः प्रमाणमेवेति भावः । स्वविषयपरिच्छेदकत्वात्तु फलं, परिच्छेद एव परिच्छेदकः, स्वार्थिकः प्रत्ययः ।

त्रिविधमिति सूत्रावयवमर्थगौरवाद्वार्त्तिककार उद्धाध्यं व्याचष्टे । त्रिविधमितीति । ( ४६ । २ ) अन्वयव्यतिरेकिणं लक्षयति । तत्रेति* । विवक्षितोपपत्तिः पक्षधर्मता । तज्जातीयोपपत्तिः अन्वयः । विपक्षावृत्तिर्व्यतिरेकः । अन्वयिमात्राद्व्यतिरेकिमात्राच्च व्यावृत्तोऽन्वयव्यतिरेकी दर्शनीय इति हेतुत्रयसाधारणे अबाधितविषयत्वासत्प्रतिपक्षत्वे सती अपि रूपे न दर्शिते । विवक्षितप्रत्ययमन्तरेण चान्वयव्यतिरेकयोस्तज्जातीयातज्जातीयवृत्तिव्यावृत्त्योरशक्यप्रतीतित्वाद्विवक्षितोपादानं, तत्प्रसङ्गेन च तद्धर्मता हेतुत्रयसमाप्ताऽपि दर्शिता । तस्योदाहरणमाह । यथेति । प्रत्यक्षत्वादिति हेतुरात्मनि नित्येऽस्तीत्यत उक्तम् , बाह्यकरणेति । तथाऽपि सामान्यविशेषैर्घटत्वादिभिर्व्यभिचार इत्यत उक्तम्, सामान्यविशेषवत इति । तथाऽपि परमाणुभिर्बाह्यप्रत्यक्षैर्योगिनां व्यभिचार इत्यत उक्तम् , अस्मदादीति । तथा चायं नित्येभ्य आकाशादिभ्यो घटादिषु चानित्येष्वन्वित इति

* इदं २ पु० नास्ति ।

भवत्यन्वयव्यतिरेकी। अन्वयिनं लक्षयति। अन्वयीति। विपक्षहीन इति। विपक्षाभावेन ततो व्यतिरेकाभावं दर्शयति। सद्भ्यामभावो निरूप्यते नैकेन सतेत्युक्तं, तेन हेतोर्यतो विपक्षान्निवृत्तिः स एव नास्तीति कुतो निवर्तताम्, पक्षादन्यस्य सर्वस्यैव सपक्षत्वात्। न निवर्तते चेदस्तु हेतोस्तत्र वृत्तिर्निवृत्तिनिषेधरूपत्वाद्वृत्तेरिति चेत्। न। यस्याभावाधिकरणत्वमपि न भवति निरुपाख्यस्य तस्य भावाधिकरणत्वशङ्केति सुभाषितम्। न खलु मुमूर्षोस्तोयाभ्यवहारेऽसमर्थस्य शष्कुलीभक्षणं शङ्कते चेतनः। तत्किमिदानीं भावाभावौ न परस्पराभावात्मानौ यदेकनिषेधे नान्यविधिः स्यात्। सत्यम्। यत्रैकतर एतयोर्निषिध्यते (व्यतिरेको निषिध्यते) विधीयते वा तत्र तदितरविधिर्निषेधो वाऽवश्यं भवेत्। न त्विह परमार्थतः कस्यचिन्निषेधः। ननु चात्र निरुपाख्यो हेतोर्व्यतिरेको निषिध्यते। ननु निरुपाख्यो निषेधाधिकरणमिति वचः स्ववचरितविरुद्धं, न चैतत्तत्त्वतो निरुपाख्ये हेतोर्व्यतिरेकं व्यासेधामो नाप्यन्वयं विदध्मः। नो खलु अयं सकलप्रतिपक्षभाजनं क्वचिदप्युपयुज्यते। उपयोगे वा निरुपाख्यो न भवेत्। कस्तर्हि न निरुपाख्ये हेतोर्व्यतिरेक इत्यस्य वचनस्यार्थः। अथ निरुपाख्ये हेतोर्व्यतिरेक इत्यस्य भवद्भाषितस्य कोऽर्थः, अहृदयवाचां खल्वहृदया एव प्रतिवाचो भवन्ति। यक्षानुरूपो बलिरिति हि लौकिकानामाभाणकः। न चात्यन्तादृष्टपूर्वाणां कल्पनाजालगोचरत्वमिति चोपपादितमन्यथाख्यातिनिरूपणावसरे। कल्पितगोचरश्च व्यतिरेकोऽपि काल्पनिक इति नानुमानाङ्गं भवति। स्वाभाविकरूपसम्पन्नं हि प्रमाणं तत्त्वज्ञानरूपफलाय कल्पते न कल्पितरूपसम्पदा, तस्याः सर्वत्र सुलभत्वादिति। तत्त्वविषयत्वं

चानुमानस्योपपादयिष्यते । तस्मादनुपाख्ये विपक्षे हेतोर्व्यतिरेकनिवृत्तौ वा व्यतिरेके वा सहृदयानां मूकतैवोचिता । न चैतावता हेतोरगमकत्वं, न हि व्यतिरेकोऽस्तीत्येव गमको भवति, मा भूदसाधारणस्यापि गमकत्वं, किं तु स्वसाध्येन सह स्वाभाविकसम्बन्धशालितया, सा चान्वयव्यतिरेकाभ्यामिवान्वयमात्रेणाप्युपाधिरहितेन शक्या ज्ञातुमिति कृतमत्र व्यतिरेकेण । विपक्षसम्भवे तु तत्रापि हेतुवृत्तिशङ्कानिराकरणाय व्यतिरेकग्रहणमुपासनीयमिति सर्वमवदातम् ।

उदाहरणमाह । यथेति । ( ४६ । ६ ) स्वमते त्वभिधेयो विशेषः प्रमेयत्वात् सामान्यवत्, परमाण्वाकाशादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वाद् घटवदित्यादयो द्रष्टव्याः । विश्वस्यैव सदसत्प्रभेदभिन्नस्य यथास्वं पक्षसपक्षयोरन्तर्भावेन विपक्षाभावादिति । व्यतिरेकिणं लक्षयति । व्यतिरेकीति । तमिमं व्यतिरेकिणं हेत्ववयवलक्षणव्याख्यानावसरे वार्तिककृद्दर्शयिष्यतीति नेहोपपादितम् । तदेवं त्रिविधमित्यवच्छिद्य व्युत्पाद्य सम्प्रति पूर्ववदित्यादिना एकवाक्यतया व्याचष्टे । अथ वा त्रिविधमिति । ( ४६ । ९ ) तिसृष्वपि विधासु साध्यवचनस्य पूर्वमुपपादनात् पूर्वं साध्यं तद्यस्यास्त्यधिकरणतया तत्पूर्ववत् । तथाऽप्यनित्याः परमाणवो गन्धवत्त्वाद् घटवदित्यपि हेतुः स्यादस्ति साध्यं तस्यापि, पार्थिवानामप्यणूनामनित्यत्वेन सिषाधयिषितत्वादित्यत आह । व्याप्त्येति । ( ४६ । १० ) अस्ति गन्धवत्त्वस्य साध्यं न तु व्याप्त्या, पृथिवीमात्रवृत्तितया चतुर्षु परमाणुषु तदभावात् । साध्यस्योपयुक्तत्वात् ततोऽन्यस्तज्जातीयः शेषः साध्यसामान्येन समान इति यावत्, तदिदमाह । साध्यतज्जातीय इति । पदानि विभज्यार्थमाह ।

पूर्ववन्नामेति। सामान्यतोऽदृष्टमिति नञमन्तर्भाव्य व्याचष्टे। सामान्यतश्चेति। तथा च बाधितविषयं प्रकरणसमं चानुमानं स्यादित्यत आह। चशब्दादिति। वार्तिकस्थचशब्देनासत्प्रतिपक्षत्वमपि सूचितम्। तेन सूत्रस्थेनाबाधितत्वमसत्प्रतिपक्षत्वमपि रूपद्वयं समुच्चितमित्युक्तं भवति। नन्वेवं त्रिविधोऽपि हेतुः पञ्चलक्षणः स्यादित्यत आह। एवमिति। एतदुक्तं भवति, अबाधितविषयमसत्प्रतिपक्षं पूर्ववदिति ध्रुवं कृत्वा शेषवदित्येका विधा, सामान्यतोदृष्टमिति द्वितीया, शेषवत्सामान्यतोदृष्टमिति तृतीया, तदेवं त्रिविधमनुमानम्। तत्र चतुर्लक्षणं द्वयम्। एकं पञ्चलक्षणमिति। तदेवं स्वमतेन सूत्रं व्याख्याय भाष्यकृन्मतेन व्याचष्टे। अथ वेति। ( ४६। १८ ) आक्षेप्तुं स्वरूपतो व्याचष्टे। तत्रेति। पूर्वं कारणं कार्यात्, तद् यस्यास्ति विषयतया परामर्षज्ञानस्यानुमानस्य तत्पूर्ववदित्यर्थः। विकल्प्याक्षिपति। यदि तावदिति। सर्वत्रानुमानप्रसङ्गादिति भावः। अतिप्रसङ्गभिया कल्पान्तरमातिष्ठते। अथ पुनरिति। दूषयति। एतदपीति। दूषणान्तरं समुच्चिनोति। कारणदर्शनाच्चेति। नासिद्धाश्रयो हेतुर्गमक इति भावः। परिहरति। नेति। द्वयमपि नाभ्युपेयत इत्यर्थः। किं तर्ह्यभ्युपेयत इत्यत आह। कार्यं त्विति। एनं प्रकारमन्यत्राप्यतिदिशति। एवमिति। पृच्छति। कथमिति। उत्तरम्, द्वयोरिति। पूर्वशब्देन कारणाभिधायिना प्रतिसम्बन्धितया कार्यमप्युपाक्षिप्तमतो द्वयोरप्युपाक्षिप्तयोः कारणस्योपयोगादनुमानभावेनेति योजना। उदाहरणमाह। उदाहरणमिति। यद्यपि कारणमात्रं व्यभिचरति कार्योत्पादं तथाऽपि यादृशं न व्यभिचरति तत्र निपुणेन प्रतिपत्त्रा भवितव्यम्। अन्यथा धूममात्रमपि वह्निमत्तां व्यभिचरती-

ति न धूमविशेषो गमको भवेत्। रसाद्रूपानुमाने तु वैनाशिका-
नामापादितं कारणात् कार्यानुमानमस्माभिः। अपि चान्त्य-
तन्तुसंयोगानन्तरं यत्र पटो जायते तत्रापि शक्यं कारणात्का-
र्यानुमानम्। यदा खल्वयमन्यत एवोद्बुद्धसंस्कारो व्याप्तिस्मृति-
मान् अविचलेष्वितरेषु तन्तुषु अन्त्यतन्तावुत्पन्नां क्रियामिन्द्रिय-
सन्निकर्षात् प्रथममेव परामृशति तथा चेयमिति, तदैव क्रियातो
विभाग इत्येकः कालः, अथ यदा विभागात् पूर्वसंयोगनाश-
स्तदा परामर्शादवश्यम्भाविपटविशिष्टेयं क्रियेत्यनुमानोत्पाद इत्ये-
कः कालः। अथान्त्यस्य तन्तोः तन्तुसंयोगोऽथ पटोत्पादो-
ऽथ तत्र रूपाद्युत्पादः, अथ प्रत्यक्षदर्शनमित्यनुमानोत्पादस्य पर-
स्ताच्चतुर्थे क्षणे प्रत्यक्षम्। यदि तु क्रियोत्पादानन्तरमालोचन-
मिष्यते तथाऽपि तृतीये क्षणे प्रत्यक्षस्योत्पाद इति नानवस-
रमनुमानम्। अपि च बधिरो मुरजमुखमभिहत्य स्वपाणिना-
भिघातादेव शब्दकारणात् तत्कार्यं शब्दं निःशङ्कमनुमिमीते।
एवमन्यान्यपि कारणात्कार्यानुमानान्यूहनीयानि। शेषवदुदा-
हरणमाह। नद्या इति। ( ४७। १२ ) चोदयति। कथं पुनरि-
ति। परिहरति। नेति। अनुमीयतेऽनेनेत्यनुमानं नदीपूरः। ननु
वृष्टिरनुमीयमाना पूरविशेषान्नातीता शक्याऽनुमातुम्, अनुमान-
समये तदत्ययस्याशक्यनिश्चयत्वात्। नापि च वर्तमाना, तद-
त्ययस्यापि तदानीं सम्भवात्। एवं भविष्यन्त्यपि साधकबाध-
कप्रमाणाभावेन सन्दिग्धैव। तस्मात्त्रैकाल्यस्याशक्यनिश्चयत्वाद-
नुपपन्नमनुमानमित्यत आह। भविष्यतीति। कारणस्य का-
र्यात् पूर्वकालता शक्या निश्चेतुं कार्येण लिङ्गेन, तेन नातीत-
त्वादि सन्देहः क्षतिमावहति। यः कश्चिदिति योग्याभिप्रायम्,
स च कार्यस्य पुरस्तात्ततो निश्चयव्याप्त इत्यर्थः। सामान्यतो-

दृष्टोदाहरणं भाष्यकारीयं दुरवबोधं शेषवदुदाहरणान्तर्गतं च, अत्रापि कार्येण सवितुर्देशान्तरप्राप्त्या तत्कारणस्य व्रज्याया अनुमानात् । न चैतावताऽनुमानस्य त्रैविध्यं भवति, उदाहरणमात्रस्यानन्त्येनानन्त्यप्रसङ्गात् । तस्माद्भाष्यकारव्याख्यानमरोचयमानो वार्त्तिककारोऽन्यथा व्याख्यायोदाहरणान्तरमाह । सामान्यतोदृष्टं नामेति । (४७ । १९) साध्यधर्माविनाभाविना विशेषणेन साध्यधर्मेण विशिष्यमाणो धर्मी गम्यते गमकत्वेन, हेतुविशिष्टो हि धर्मी गमकः, जिज्ञासितधर्म्मविशिष्टश्च गम्यः । यथाऽऽहुः,

'स एव चोभयात्माऽयं गम्यो गमक इष्यते ।
असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः ।' इति ।

अविनाभावित्वं स्वभावप्रतिबद्धत्वं सर्वेषामेव हेतूनां सामान्यं, तत्र धर्मधर्मिणोरभेदविवक्षया हेतुरेव सामान्यमुक्तः । सामान्येनाविनाभाविना हेतुना लक्षितं दृष्टं धर्मिरूपमनुमानं सामान्यतोदृष्टमनुमानम् । तृतीयायास्तसिः । तदेतत्पूर्ववच्छेषवतोरपि प्रापकं तत्पदसन्निधानात् गोबलीवर्दन्यायेन ते परिसज्यान्यत्र निविशते । तदिदमुक्तमकार्यकारणभूतेनेति । उदाहरणमाह । यथा बलाकयेति । भाष्यकारीयमुदाहरणमुपन्यस्याक्षिपति । अपरे पुनरिति । तदिति ( ४८ । १ ) गतिमानिति परामृशति । उपलब्धिलक्षणप्राप्तत्वादिति । कर्मणो हि महत्त्वरूपविशेषैकार्थसमवाय उपलब्धिलक्षणप्राप्तिः प्रत्यक्षोपलब्धियोग्यता । समाधत्ते नैवमिति* । देशान्तरप्राप्तिमानादित्यः, द्रव्यत्वे सति क्षणवृद्धिप्रत्ययाविषयत्वे च सति प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसम्बन्धादनुत्पन्नपादविहारस्य परिवृत्त्य

* नैवेदमिति मु० वा० पु० पाठः ।

तत्प्रत्ययविषयत्वात्, मण्यादिवत् । तत्प्रत्ययविषयत्वादित्युच्यमाने पुरःस्थितेन स्थाणुना व्यभिचारः, सोऽपि हि प्रत्यभिज्ञाविषयो भवति तत्रैव स्थितस्तन्निवृत्त्यर्थं परिवृत्त्येत्युक्तम् । तथाऽपि गुणादिभिर्व्यभिचारः, तन्निवृत्त्यर्थं द्रव्यत्वे सतीत्युक्तम् । तथाऽपि प्रदीपादिभिर्व्यभिचारस्तन्निवृत्त्यर्थं क्षयवृद्धिप्रत्ययाविषयत्वे सतीति विशेषणम् । तथाऽपि पृष्ठतोऽवस्थितया स्थूणया व्यभिचारस्तन्निवृत्त्यर्थं प्राङ्मुखोपलभ्यते सतीति विशेषणम् । उपलभ्यता चोपलब्धिकर्म्मता । सा चेहातीता विवक्षिता, अन्यथा पूर्वापरजलधिवेलावगाहिना तुहिनशैलेन व्यभिचारः । यद्यप्ययमपि परावृत्य तत्प्रत्ययवतोऽतिपतितोपलब्धिकर्म्मभावस्तथाऽपि तदा नरान्तरस्योपलभ्यः, मार्तण्डमण्डलं त्वस्ताचलचूडावलम्बि न प्राच्यां कस्यचिदुपलम्भगोचर इति वैधर्म्यम् । तथाऽपि यदि द्रष्टैव(१) पुरोवस्थितस्य पश्चिमाभिमुखस्य प्रासादस्य स्वयमुपनिपत्य पृष्ठतो भवति तदोक्तलक्षणस्य हेतोरस्ति व्यभिचारः, तन्निवृत्त्यर्थमनुत्पन्नपादविहारस्येति विशेषणम् । तदभिमुखदेशसम्बन्धादिति ल्यब्लोपे पञ्चमी । स्वाभिमुखदेशमुद्दिश्यानुत्पन्नः पादविहारो यस्य स तथोक्तः । तमुद्दिश्य खल्वयं पद्भ्यां सञ्चरमाणः प्रासादस्य पृष्ठतो भवतीति भावः । देशान्तरप्राप्तौ साधनान्तरमाह । देशान्तरेति । ( ४८ । ६ ) सत्यविनाश इति च द्रष्टव्यम् ।

ये त्विमामनुमानपरम्परामसृष्यमाणा दिशः प्रत्यक्षतामिच्छन्ति विप्रतिपन्नं चानुमानेन बोधयन्ति, तन्मतमुपन्यस्य दूषयति । तच्च नेति । अरूपमात्मसुखाद्यपि प्रत्यक्षमिति शङ्कमानेन बाह्यकरणेत्युक्तम् । पृच्छति । कथं तर्हीति । उत्तरम्, दिग्देशेति ।

(१) द्रष्टव्यैवेति २ पु०पा० ।

अन्यथासिद्धतया अङ्गुल्या निर्देशस्य दिक्प्रत्यक्षत्वेन न स्वाभाविकः सम्बन्ध इत्यर्थः। स्यादेतत्। अप्रत्यक्षायां दिशि दिग्देशसम्बन्धिष्वित्येतदेव कुत इत्यत आह। आदित्येनेति। (४९।२) तद्विभजते। प्राचीत्ययमिति। तत्पुनरिदं प्रत्यक्षमा चोदयादाचास्तमयाद्देशाद्देशान्तरं सञ्चरणं मार्तण्डमण्डलस्य, अनाकलितद्रव्यत्वे सतीत्यादिदण्डकानुमानानामिन्द्रियव्यापारानन्तरमुपजायमानत्वात्, तत्र मा भूवन्नाकाशदिगादयः प्रत्यक्षास्तथाऽपि परितो निष्पतदतिविशदमयूखजालमध्यवर्तिनो हेलिमण्डलस्य त एव मयूखभागभेदाः देशान्तर इति तेषां प्रत्यक्षाणां प्रत्यक्षेण सवितृमण्डलेन संयोगविभागाः प्रत्यक्षा भविष्यन्तीति युक्तम्। इदं त्वतिस्फुटतयानभिधाय शिष्यव्युत्पादनायाक्षुण्णं मार्गान्तरं दर्शितमिति मन्तव्यम्। तदेवं रूपेण स्पर्शानुमानं शिंशपात्वेन श्रुतेन वृक्षत्वानुमानमित्यादि सामान्यतोदृष्टेन सङ्गृहीतं वेदितव्यम्।

स्वमतेन व्याख्यान्तरमाह। अथ वा त्रिविधमिति। तद्विभजते। प्रसिद्धमिति। पक्षैकदेशे सदपि सिद्धं, पक्षव्यापकं तु प्रकर्षेण सिद्धमित्यर्थः। यद्यप्यविनाभावः पञ्चसु चतुर्षु वा रूपेषु लिङ्गस्य समाप्यत इत्यविनाभावेनैव सर्वाणि लिङ्गरूपाणि सङ्गृह्यन्ते, तथापीह प्रसिद्धसच्छब्दाभ्यां द्वयोः सङ्ग्रहे गोबलीवर्दन्यायेन तत्परित्यज्य विपक्षव्यतिरेकासत्प्रतिपक्षत्वाबाधितविषयत्वानि सङ्गृह्णाति। अत्रापि यथासम्भवं चतुर्णां पञ्चानां वा रूपाणां लिङ्गसम्बन्धः। तदनेन प्रबन्धेनानुमानवादिनां स्वरूपसङ्ख्याफलविप्रतिपत्तयो निराकृताः। अत्र तत्पूर्वकमिति स्वरूपविप्रतिपत्तिरनुमानमितिसमाख्यानिर्वचनसामर्थ्यात्फलविप्रतिपत्तिः त्रिविधमिति न्यूनाधिकसङ्ख्याव्यवच्छेदेन सङ्ख्यावि-

प्रतिपत्तिर्निराकृता ।

सम्प्रसान्तर्गणिकभेदानामानन्त्यादनुमानस्याशक्यलक्षणत्व-मिति यदि कश्चिदनुमन्येत तन्निराकरणाय त्रैविध्यमनुमानस्योच्यत इति त्रिविधपदस्य तात्पर्यान्तरमाह । अथ वेति । त्रिविधत्वेन यतो नियतमतः शक्यलक्षणमित्यर्थः । अनित्यः शब्दः कृतकत्वादिति सपक्षे सदेव । अनित्यः शब्दोऽस्मदादिप्रयत्नानान्तरीयकत्वादिति सपक्षे सदसत् । तदिदमन्वयव्यतिरेकि द्विविधम् । एवमन्वय्यपि द्वेधा तत्र सपक्षे सदेव, यथा परमाण्वादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वाद् घटवदिति । तथा सपक्षे सदसद्यथा तत्रैव साध्ये सत्वाद् घटादिवदिति । कालभेदः त्रैकाल्यम् । प्रतिपन्नोऽप्रतिपन्नः सन्दिग्धो विपर्यस्तश्चेति पुरुषभेदः ।

पूर्वं सिद्धवत्पूर्ववदित्यनूद्य तस्योदाहरणमुक्तम्, सम्प्रति प्रश्नपूर्वकं तदर्थाभासनिराकरणेन तात्त्विकमस्यार्थमाह । पूर्ववदित्युक्तमिति । भाष्यव्याघात इत्यर्थः । पूर्ववदित्यस्य व्याख्यानं शेषवदित्यत्रापि योजयति सामान्यतो दृष्टं चातिदिशति । एवं शेषवदादिष्विति ।

अथ वा पूर्ववदिति भाष्यम् । तस्यार्थः, पूर्वेण तुल्यं वर्त्तत इति पूर्ववत् । क्रियातुल्यतायां च वतिरिति क्रियातुल्यता दर्शिता । यथेति । पूर्वमन्यतरदर्शनेन सहान्यतरदर्शनं दृष्टान्तधर्मिणि यथा । प्रत्यक्षभूतयोरिति प्रमाणमात्रोपलक्षणम् । एवं साध्यधर्म्मिणि अन्यतरधर्म्मदर्शनेन साधनधर्म्मदर्शनेनान्यतरस्य साध्यधर्म्मस्यानुमानमनुमितिदर्शनमिति भवति क्रियातुल्यता । तदेतद्भाष्यमनुभाष्य व्याचष्टे । अथ वेति । अत्र दिङ्नागेन धूमादग्निरूपधर्मान्तरानुमानं अग्निदेशयोः सम्बन्धानुमानं च दूषयित्वाऽग्निविशिष्टदेशानुमानं समर्थितम् । तथा चाह,

'केचिद्धर्मान्तरं मेयं लिङ्गस्याव्यभिचारतः।
सम्बन्धं केचिदिच्छन्ति सिद्धत्वाद्धर्म्मधर्मिणोः(१)॥
लिङ्गं धर्मे प्रसिद्धं चेत्किमन्यत्तेन मीयते।
अथ धर्मिणि तस्यैव किमर्थं नानुमेयता॥
सम्बन्धेऽपि द्वयं नास्ति षष्ठी श्रूयेत तद्वति।
अवाच्योऽनुगृहीतत्वान्न चासौ लिङ्गसङ्गतः॥

न हि सम्बन्धधर्म्मतया लिङ्गं प्रमीयते, अपि तु देशसङ्गतमित्यर्थः।

लिङ्गस्याव्यभिचारस्तु धर्म्मेणान्यत्र दृश्यते।
तत्र प्रसिद्धं तद्युक्तं धर्म्मिणं गमयिष्यति॥' इति।

तत्र दिङ्नागदूषितान् कल्पान् अन्यांश्च विकल्पान् दिङ्नागसमर्थितं च कल्पमुपन्यस्य दूषयति। अन्ये पुनरिति। धर्मधर्मिभावानुपपत्तेरिति। (८०।३) धर्मेण हि धर्मी प्रतिपत्तव्योऽन्यथाऽतिप्रसक्तेरिति भावः। देशस्य च स्वरूपेणेत्यर्थः। शङ्कते। अथापीदमिति। निराकरोति। तच्च नैवमिति। यः कश्चिद्वा देशोऽग्निमान् साध्यो धूमवान्वा देशभेदः, तत्र पूर्वस्मिन्कल्पे निराकरणमाह। अतद्धर्मत्वादिति। यः कश्चिदग्निमत्तया देशः साध्यते न तस्यावश्यं धूमो धर्म्म इत्यर्थः। न चैतत्साध्यं सिद्धत्वादित्याह। न चाग्नेरिति। द्वितीयकल्पमाशङ्कते। अयमिति। निराकरोति। न तस्येति। शङ्कां विभजते। देशेति। निराकरणं विभजते। न ह्ययमिति। न ह्ययमेवंवादी दिङ्नागो धूमाधारं देशविशेषं पश्यति। न ह्यस्य मते पर्वतो नाम कश्चिदवयवी यदाधारो धूम उपलभ्येत किं तु परमाणवः परमसूक्ष्मा अतीन्द्रियाः पर्वतः, एवं धूमोऽपि तादृश एव। यथा व-

(१) सिद्धत्वाल्लिङ्गलिङ्गिनोः— पाठः।

क्ष्यति, सर्वाग्रहणमवयव्यसिद्धेरिति । येषामपि देशभेदोऽवयवी दर्शनार्हः तेषामपि वियद्वर्त्तिनीं धूमलेखामभ्रंलिहमुपलभ्यानुपलब्धदेशानां नानुमानसम्भव इति भावः । शङ्कते । अविनाभावेनेति । तदेव विभजयते । अथापीति । निराकरोति । तन्नेति । विकल्पयति । अग्निधूमयोरिति । कार्यकारणभावमालम्बते । आस्त्विति । दूषयति । तन्नेति । धूमेन हि वह्निरस्तीत्यनुमीयते, न च कार्यसत्ता निमित्तकारणसत्तया व्याप्ता । न हि यदा यत्र वा पटस्तदा तत्र वा कुविन्दः । नाप्यसमवायिकारणसत्तया, न हि यदा यदा संयोगस्तदा तदा कर्म, तस्मात्समवायिकारणाविनाभावः कार्यस्य वक्तव्यः, तत्रेदं दूषणम्, अतद्वृत्तित्वादिति । एकार्थसमवायमविनाभावं दूषयति, नैकेति । एकार्थे समवाय इति हि द्वेधा, एकस्यार्थस्य समवाय एकत्रार्थे समवाय इति, तत्र प्रथमकल्पं दूषयति । ताभ्यामिति । यदि हि वह्निधूमाभ्यामेकोऽर्थः कश्चिदारभ्येत ततोऽसौ तयोः समवेयात्, न त्वेतदस्तीत्यर्थः । द्वितीयं कल्पं दूषयति । न च ताविति । तत्किमसम्बद्धावेव वह्निधूमौ, तथा च प्रतीतिविरोध इत्यत आह । सम्बन्धमात्रमिति । संयोग इत्यर्थः । तदेव तद्विधार्यतामित्यत आह । तदपीति । पृच्छति । कथमिति । उत्तरम्, यदि तावदिति । कुरुते प्रयोगम् । अस्ति सम्बन्धोऽग्निधूमयोर्धूमादिति । दूषयति । तन्नाप्रतीतत्वात् । (५।१।१) तदनेनानैकान्तिकत्वं दर्शयति । सम्बन्धान्तरमाशङ्कते । रूपस्पर्शवदिति । न हि बौद्धसिद्धान्ते द्रव्यं नाम किञ्चिदस्ति यत्र रूपस्पर्शौ समवेतौ, किं त्वेकसामग्र्यधीनतया नियतसाहचर्यौ, तथा वह्निधूमावपि भविष्यत इत्यर्थः । दूषयति । नोभयोरिति । उभयसाहचर्यनिराकरणेन यत्र धूमस्तत्राग्निरित्यपि पराकृतम्, तस्यापि साहच-

र्थविशेषत्वादित्याह। यत्र धूम इति। गत्यन्तराभावादुपसंहरति। न चेति। शङ्कते। लोकेति। निराकरोति। नास्तीति। यत्र तावत्पर्वतनितम्बवार्त्तिनी धूमलेखा सततमुद्गच्छन्ती दृश्यते तत्रासौ देश एव तद्विशिष्टोऽनुमीयते इति लोकप्रसिद्धमेवेति किमत्र वक्तव्यम्। यत्र तु भूयिष्ठतया तस्य धूमस्य दूरत्वेन देशो न लक्ष्यते, धूम एव त्वभ्रंलिहो लिम्पन्निवाभ्रमण्डलमवलोक्यते, तत्र देशानुमानप्रयासालसतया दृश्यमानो धूमविशेष एवाग्निमत्तया साध्यते धूमत्वैकार्थसमवायिभिः तद्गतैः सन्तत्यूर्द्धगमनादिभिरित्याह। धूमविशेषेणेति। विशिष्यतेऽनेनेति विशेषः सन्तत्यूर्द्धगमनादिः, तेन धूममात्राद्वह्निव्यभिचारिणो वह्न्यविनाभावी धूमो विशेष्यत इत्यर्थः। शेषमतिरोहितार्थम्।

शेषवन्नाम परिशेषः, द्रव्यत्वकर्म्मत्वयोः शब्दे निराकार्य्यत्वेनोपयुक्तत्वात्ताभ्यामन्यद् गुणत्वं शेषः, स यस्यानुमानस्य प्रतिपाद्यतया तच्छेषवत्, तत्र न द्रव्यं शब्दः एकद्रव्यत्वात्, द्विविधमेव हि द्रव्यमद्रव्यमनेकद्रव्यं च, अद्रव्यं परमाण्वादि, अनेकद्रव्यं च घटादि, शब्दस्त्वेकद्रव्यं, तस्मान्न द्रव्यं रूपादिवत्। न कर्म्म शब्दान्तरहेतुत्वादिति, तदेतद्भाष्यमाक्षिपति। न कर्म्मेति। परिहरति। नेति। अन्यमस्यार्थं दर्शयति। समानजातीयारम्भकत्वादिति। यत्समानजातीयारम्भकं न तत्कर्म्म यथा रूपादय इति। कार्य्यत्वात्तावच्छब्दः समवायिकारणवान्। तत्र च पृथिव्यादिनिषेधान्नभोऽस्य समवायिकारणम्। न चैष नभोव्यापकः सर्वत्रोपलम्भप्रसङ्गात्। तस्मादव्यापकः। कर्णशष्कुल्युपहितं च नभः श्रोत्रम्, ताल्वादिसंयोगोपधानेन च नभःप्रदेशे शब्दः समवेतः। प्राप्यकारि च श्रोत्रं न च वक्तृवक्त्रावरुद्धनभःप्रदेशं प्राप्नोति, चाद्रव्यं शब्दो गत्वा श्रोत्रेण

सम्बध्यते । तस्माद्वीचीतरङ्गवृत्त्या स्वदेशानन्तरदेशे शब्दान्तरारम्भणपरम्परया श्रोत्रदेशोत्पन्नं शब्दं गृह्णातीति सिद्धं सजातीयारम्भकत्वादिति । इदं तु परिशेषस्योदाहरणं नादरणीयम् । व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति । एष पुनरन्वयव्यतिरेकी, द्रव्यकर्मान्यत्वे सति सदाद्यभेदस्य सपक्षे रूपादौ सत्त्वाद्विपक्षे सामान्यादावभावात् । तस्मादात्मतन्त्रतासाधनमिच्छादीनां परिशेषोदाहरणं द्रष्टव्यम् । तच्चानन्तरमेव वक्ष्यति । सामान्यतोदृष्टं नामेत्यादिभाष्यमनुभाष्याक्षिपति । सामान्यत इति । कथं तर्ह्यनुमानमत्र प्रवर्त्तत इति । नित्यपरोक्षेण सह कस्यचिल्लिङ्गस्य सम्बन्धादर्शनादित्यर्थः । व्याहतं चेति । स खल्वत्यन्तापरिदृष्टः स्वरूपतो वा साध्येत दृष्टधर्मिविशेषणतया वा । तत्र पूर्वस्मिन्कल्पे नानुपलब्ध इति व्याघातः, उत्तरस्मिन्सन्दिग्ध इति । विशेषस्मृत्यपेक्षो हि संशयो नात्यन्तानुपलब्धधर्म्मवत्तायां कचिद्भवितुमर्हति । न खलु सप्तमरसवत्तया केचिद् द्रव्ये संशेरत इति भावः । समाधत्ते । न विशेषणभूतस्येति । ( ५२ । १ ) न तावत्स्वरूपेणानुमीयते येन नानुपलब्ध इति व्याहन्येत किं तु दृष्टस्य धर्मिणो विशेषणतया, न चैवं सर्वानुमानाविशेषः, साध्यधर्मिण्यस्मदादिभिः कदाचिदपि प्रत्यक्षेणानुपलम्भात् । तज्जातीयेन तु दृष्टान्तधर्मिणि दृष्टेन प्रत्यक्षतो वा मानान्तराद्वा साधनधर्मस्य स्वाभाविकप्रतिबन्धग्रहसम्भवादित्यर्थः। उदाहरणमाह । यथेच्छादिभिरात्मा । (५२ । २) तदेव विभजते । इच्छादयः खलु धर्मिणो भवन्ति, मानसप्रत्यक्षदृष्टाः। तेषामात्मा विशेषणं, कुतः,गुणभूतोऽवच्छेदकतया यतस्तस्मादात्मविशिष्टा इच्छादयः साध्या इत्युक्तं भवति । साधनधर्म्मं तद्वृत्तिनं दर्शयति । इच्छा-

दीनां गुणत्वमिति। ननूक्तमनुपलब्धचरेण साध्यधर्म्मेण न सन्देहविषयत्वमनुपलब्धचरश्चात्मेति कथं तद्विशिष्टा इच्छादयो न्यायविषया इति शङ्कामुररीकृत्य प्रयोगं सूचयति। परतन्त्रा इति। मा तत्र सैत्सीदात्मा, पारतन्त्र्यमात्रं तु सिद्धमित्यर्थः। तेन सामान्यतोदृष्टस्य पारतन्त्र्यमात्रविषयता। न च पारतन्त्र्यमिच्छादीनामनुमेयात्मवादिनां कदाचिदप्यस्मदादिप्रत्यक्षगोचरः, परस्य तदाश्रयस्य नित्यपरोक्षत्वादिति। तदेवं सामान्यतोदृष्टमुदाहृत्य परिशेषोदाहरणं पारमार्थिकं प्रश्नपूर्वकमादर्शयति। पारतन्त्र्येति। इच्छादीनां हि बाधकैरपनीते द्रव्याष्टकगुणत्वे गुणत्वमेव व्यतिरेकी हेतुरात्मपारतन्त्र्ये प्रमाणम्। यद्यपि चायं स्वरूपेणात्मा न प्रसिद्धस्तथाऽपि द्रव्याष्टकव्यतिरेकादिशब्दैरदूरविप्रकर्षेण परामृष्टः शक्नोति विशेष्टुं धर्मिणि च न्यायप्रवृत्त्यङ्गं संशयमापादयितुमिति निरवद्यम्। अत्र भाष्यं विभागवचनादेव त्रिविधमिति सिद्ध इति। तस्यार्थः,त्रिविधमिति विभागवचनादेव त्रिविधे पूर्ववदादौ सिद्धे किमर्थं पूर्ववदाद्युपादानं सूत्रेणेति। तत्र समाधानम्, त्रिविधवचनं त्रिविधस्य पूर्ववदादेर्वचनमुक्तिः। महतस्त्रिविधस्य महाविषयस्यातीतानागतवर्त्तमानविषयस्य लघीयसा सूत्रेण तत्पूर्वकमित्येतावतैवोपदेशे परं वाक्यलाघवं मन्यमानस्यान्यस्मिन्वाक्यलाघवेऽनादरः सूत्रकारस्येति शिष्यान् व्युत्पिपादयिषोः। अत्र निदर्शनम्। तथा चायमस्य समाचारः इत्थंभूतेन वाक्यविकल्पेन वैचित्र्येण प्रवृत्त इति योजना। एवं तावल्लक्षणभेदादनुमानं भिन्नं प्रत्यक्षाद्दर्शितम्, भाष्यकारस्तु विषयभेदादपि भेदमाह। सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानम्। चो विषयभेदं समुच्चिनोति।

सदिति वर्त्तमानम् । असदित्यतीतानागते । प्रत्यक्षं हि लौकिकं वर्त्तमानविषयमेव । अनुमानं तु त्रैकाल्यविषयम् । यद्यपि प्रत्यक्ष-मप्यतीतानागतयोः सम्प्रति निषेध्ययोर्निषेधे वर्त्तमानमसद्विषयं, तथाऽपि न निषेध्ययोः प्रवर्त्तत इत्येतावतैव सद्विषयमुक्तम् । अनुमानं तु तयोरपि प्रवर्त्तत इत्येतावता असद्विषयमुक्तम् । तदे-तदाक्षिपति । सद्विषयं चेति । ( ५२ । १३ ) न ह्यनुपलब्ध-सामान्य इति । सामान्यत उपलब्धो विशेषतश्चानिर्णीतो धर्मो न्यायप्रवृत्तावधिक्रियते न त्वनुपलब्धसामान्य इत्यर्थः । न चासतः स्वतन्त्रस्य सामान्यदर्शनमस्तीति । द्वितीयं कल्पमाशङ्कते । अथेति । एतद्दूषयितुं धर्म्मत्रैविध्यमाह । धर्म्मा इति । तद्विभजते । तत्रेति । पृच्छति । कथं पुन-रिति । यदि हि स्वतन्त्रः समवायो न तर्हि कस्याचिद्विशेषणम् , तथा च न विशेषणतया गृह्येतेति भावः । उत्तरम् , समवा-यान्तराभावात् । न विशेषणत्वं स्वातन्त्र्येण निराकुर्म्मः, किं तु वृत्तिमस्येत्यर्थः । कस्मात्पुनरस्य न समवायान्तरमभ्युपे-यत इत्यत आह । अथेति । पृच्छति । किमिदामिति । अनव-स्थाप्रसङ्गो हि नाम तर्को नैव प्रमाणमन्तरेण निर्णयाय पर्याप्त इत्यर्थः । उत्तरम् , न सन्देहः किं त्वस्त्येव न्यायः । तमाह । पञ्चेति । अयं पञ्चपदार्थवृत्तिशब्दो बहुव्रीहिणा परमाणौ वर्त्तते षष्ठीसमासेन च समवाये । न च कथञ्चिच्छब्दाभेदमात्रमनुमा-नाङ्गम्, मा भूद्गोशब्दसाम्येन वागादीनामपि विषाणित्वमित्यप-रितोषान्न्यायान्तरमाह । अनाश्रितः समवाय इति । ( ५३ । १ ) इहबुद्धिनिमित्तत्वं कारणत्वम् । संयोगेनानैकान्तो मा भू-दित्यत उक्तं व्यापकत्वे सतीति । सत्युपलब्धिकारणान्तर-सद्भावे सर्वत्रोपलभ्यता व्यापकत्वम् । तत्रेहप्रत्ययकारणत्व-

मात्मनि च समवाये चाविलक्षणमिति । न्यायेतिकर्तव्यतां तर्कं पृच्छति । यदि पुनरिति । उत्तरम् , कार्यमिति । उक्तमनवस्थाप्रसङ्गमवतारयितुमनाधारत्वप्रसङ्ग उक्तः । स्यादेतत् । भवतु वृत्तेः प्रागनाश्रितं कार्यं, पश्चात्समवेष्यति, तुरीसंयुक्तेभ्य इव तन्तुभ्य उत्पन्नः पटः पश्चात्तुर्य्यैत्यत आह । समवायश्चेति । अनवस्थाप्रसङ्गः पूर्वोक्त इत्यर्थः । शङ्कते । प्राप्तित्वादिति । प्रमाणवत्त्वात् प्राप्तसमवायस्य वृत्तिर्न्न शक्या अनवस्थाभिया परित्यक्तुमित्यर्थः । विमर्षपूर्वकं शङ्कां निराकरोति। किमिति । संयोगे प्राप्तित्वस्य न वृत्त्या स्वाभाविकः सम्बन्धः । कार्यत्वस्योपाधेः तत्प्रयोजकस्य विद्यमानत्वादित्यर्थः । अथ प्राप्तिधर्मोऽपि कस्मान्न भवतीत्यत आह। यदि पुनरियमिति । ननियमनवस्था कस्माद्बीजाङ्कुरादिष्विवेहापि नाभ्युपेयत इत्यत आह । न चैतामनवस्थामिति । अनिदंप्रथमेष्वनादित्वाच्छक्या प्रतिपादयितुमनवस्था प्रमाणेन, न त्विदंप्रथमेष्वादिमत्त्वेन तस्याशक्यनिश्चयत्वात् । तदिदमुक्तं प्रमाणाभावादिति । शास्त्रविरोधश्च समवायान्तराभ्युपगम इत्याह । समवायश्चेति । तत्त्वमेकत्वं समवायस्य भावेन सत्तया व्याख्यातमिति शास्त्रमाह, तदनेकत्वमुपपादयता बाध्यतेत्यर्थः । चोदयति । सम्बन्धिनिवृत्ताविति । तथा च विनश्यति विनष्टे च तस्मिन् यो दृश्यते स ततोऽन्य उत्पन्न इति सिद्धं समवायस्य नानात्वमिति । परिहरति । न नास्तीति । ख्यातिरुपलब्धिः । कस्मात् , अकृतकत्वात् । अकृतकत्वमेव कुत इत्यत आह अकृतक इति । कार्यं स्वोपादानेनाकृतकसम्बन्धवदाधारवत्त्वादिति व्यतिरेकी हेतुः । व्यतिरेकाव्यभिचारमाह । यद्ययमिति । उत्पद्यमानः खल्वयं समवायः सह

कार्येण न कार्यस्य, न हि सहोत्पन्नौ रूपस्पर्शौ मिथः सम्बध्येते, एकार्थसमवाययुतयोः, सोऽपि समवाये नास्ति, सन्नप्यसौ न कार्यमाधारवत् करोति । तस्मात्सहोत्पादे कार्यमनाधारं स्यादिति । शङ्कते । अथेति । कार्यात् पूर्वमुत्पन्नः समवायः पश्चादुत्पद्यमानं कार्यमुपादानाधारकं करिष्यति, कार्यहेतुबलादित्यर्थः । निराकरोति । तथाऽपीति । त्रिभ्यो हि कारणेभ्यः कार्यं भावरूपं जायते । कार्यकारणसमवायस्य च कार्यकारणे समवायिकारणे वक्तव्ये, कार्यात्प्राग्जातस्य च समवायस्य न कार्यं कारणम् । न च निमित्तकारणमात्रादस्य जन्मेति सांप्रतम्, भावोत्पादस्य सर्वत्र कारणत्रयपूर्वकत्वनियमात् । तस्मात्समवायस्य समवाय्यसमवायिकारणाभावान्न कार्यात्प्रागुत्पाद इति सुष्ठूक्तम्, तथाऽपि कस्येति वाच्यमिति । शङ्कते । अथेति । दूषयति । कार्येति । न च पटतुरीसंयोगवत्समवायस्य पश्चात्कार्यकारणसमवाय इति युक्तम्, संयोगजस्य संयोगस्य कारणत्रयसम्भवादस्य तु समवायान्तरमन्तरेण कारणत्रयायोगात्, अन्यथाऽनवस्थाप्रसङ्गादिति भावः । उपसंहरति । तस्मादिति । ततश्च न ज्ञायते किमभिप्रेत्यासद्विषयमित्युक्तमित्याक्षेप इति । समाधत्ते । तत्र प्रतिषिध्यमानेति । अतीतानागते सम्प्रति प्रतिषिध्यमाने तद्विषयमनुमानमसद्विषयमुक्तम् । तन्निषेधस्तु भवतु प्रत्यक्षगोचरस्तथाऽपि सिद्धो विषयभेद इत्यर्थः । अत्र चैष धर्मत्रैविध्यक्रमः । द्वेधा तावद् विधीयमानः प्रतिषिध्यमानश्च । विधीयमानश्च द्वेधा परतन्त्रः स्वतन्त्रश्चेति । स्वतन्त्रस्य धर्मत्वं विशेषणत्वमात्रविवक्षया द्रष्टव्यम् । ननु विधीयमानोऽप्यसन् प्रत्यक्षश्च क्वचिद्यथा व्याम्रियमाणे कुलाले जायमानो घटः । वि-

स्फारिताक्षो हि तदा घटो भवतीति प्रत्येति। न चासौ तदा सन्, सतो भवनं प्रत्यकर्तृत्वात्, गगनवदिति शङ्कते। भवतीति। निराकरोति। न जायमानेति। जायमानस्यार्थस्य विधिविषयस्य सत्तयाऽसत्तया वाऽनभ्युपगमात्। निषेधविषयतया तु तस्यासत्त्वमभ्युपेयत एव। कस्तर्हि भवतिशब्दस्यार्थ इत्यत आह। भवतीति। घटो जायत इति तु लौकिकः प्रयोगो घटशब्दं घटार्थेषु तदवयवेषूपचर्य्य तेषां च सिद्धतया कर्तृत्वादुपपादनीय इति। उपसंहरति। एवं तावादिति।

स्वलक्षणं समाधाय परेषामनुमानलक्षणं दूषयितुमुपन्यस्यति। अपरे त्विति। (८४।१) तस्यार्थमाह। अस्यार्थ इति। दूषयति। अत्रेति। यथासम्भवं समासं विकल्प्य दूषयति। नान्तरीयकार्थ इति चेति। सत्त्वं विधिविषयज्ञानगम्यत्वं, न तु सामान्यम्। सत्त्वादिभिरानित्यत्वनान्तरीयककृतकत्वधर्मैरनित्यत्वानुमानं स्यात्। न च शक्यं, तेषामाकाशादिषु नित्येषु व्यभिचारादित्यर्थः। तथाऽप्यसमर्थः समास इति। पूर्वमर्थातिरेकमात्रं दूषणमुक्तं, सम्प्रति त्वर्थातिरेकेण हेतुना विशेषणसमासानुपपत्तिरित्यपौनरुक्त्यम्। विशेषणं विशेष्येण बहुलमित्यत्र विशेषणपदोपादानमात्रे विशेष्यपदोपादानमात्रेण वाऽन्यतरस्यार्थात्प्राप्तेरुभयपदोपादानस्यैतत्प्रयोजनं यत्रोभयोः प्रत्येकं व्यभिचारः समुदाये त्वव्यभिचारस्तत्र समासो यथा स्यादिति, स चात्र नास्तीति समासानुपपत्तिरित्यर्थः। सामर्थ्यं प्रयोजनाभिसम्बन्धः। चोदयति। एकपदेति। परिहरति। अत्रापीति। प्रधानं व्यक्तिर्विशेष्यत्वात्, अङ्गं जातिर्विशेषणत्वात्। पृथिवीत्युक्ते भवति संशयः किं पृथिवीत्वं सामान्यमस्य विवक्षितं यथा पशुना यजेतेति किं वा तद्विशेष्यं द्रव्यं य-

था ग्रहं समार्ष्टीति, अत्रेदमुपतिष्ठते द्रव्यमिति । तद्धि पृथिवी-त्वात् सामान्यविशेषात् पृथिवीं व्यवच्छिनत्ति, एवं द्रव्यमित्युक्ते द्रव्यत्वसामान्यं व्यक्तिर्वेति विमर्षे पृथिवीत्येतदुपतिष्ठते । न द्रव्यत्वसामान्यं किं तु पृथिवी । न च द्रव्यत्वपृथिवीत्वयोः सामानाधिकरण्यमस्ति, न हि भवति पृथिवीत्वं द्रव्यत्वमिति, तस्मात्सामानाधिकरण्यसम्भवात् प्रधानैकव्यक्तिलाभः । इह त्वर्थो नान्तरीयकत्वं व्यभिचरति, नान्तरीयकत्वं नार्थं, न ह्यस्ति सम्भवो नान्तरीयकश्च स्यान्न चार्थ इति । नान्तरीयकशब्दवाच्यस्यानभिधेयत्वासम्भवात् । वस्तुवचनत्वेऽप्यर्थशब्दस्य लक्ष्यासम्भवाद् अविषयं लक्षणं, न हि दिङ्नागमते किञ्चिदस्ति वस्तु यन्नान्तरीयकं सद्धेतुर्भवति । यथाऽऽह 'सर्वोयमनुमानानुमेयभावो बुद्ध्यारूढेन धर्मधर्म्मिभावेन न बहिः सदसत्त्वमपेक्षते'इति । अव्यापकं च, न हि वस्त्वेव नान्तरीयकमसतोऽपि नान्तरीयकत्वादिति भावः । दूषणान्तरमाह । तद्विद इति चेति ( ५५ । ५ ) नान्तरीयकदर्शनमित्युच्यमाने शब्दसामर्थ्यादेव लभ्यते नान्तरीयकत्वविशिष्टार्थदर्शनम् । सति सम्भवे शब्दार्थपरित्यागाभावात, अतस्त्रिविध(१)लिङ्गदर्शनसिद्धेः किमपरमवशिष्यते यदवबोधाय तद्विद इत्युपादीयत इत्यर्थः । एतदेव व्यतिरेकमुखेन निरूपयति । न हीति । एतल्लक्षणदूषणं लक्षणान्तरेऽप्यतिदिशति । एतेनेति । पृच्छति । क इति । न ह्यस्मिन् लक्षणे तद्विद इत्यस्ति, येन तदतिरिच्यते इति भावः । उत्तरम्, यथेति । तेषामुदाहरणं दूषयति । उदाहरणमिति । तदनेन दिङ्नागस्य लक्षणं दूषयित्वाऽन्येषां लक्षणं दूषितम्, सम्प्रति दिङ्नागस्य स्वकीयलक्षणमपश्चार्थं वाक्यम् "अनुमेयथ त-

(१) त्रिरूप-पाठः ।

त्तुल्ये''इत्याद्युपन्यस्य दूषयति । अपरे त्विति । ( ५५ । ११ ) अनन्तरलक्षणकारमपेक्ष्यापर इत्युक्तम् । देशयति । अनुमेय इति । न हि योऽनुमेये संश्चासंश्च स शक्यः सन्निति वक्तुमित्यर्थः । समाधत्ते । नाप्रसङ्ग इति । यद्येवं स्याद्यो विपक्षे द्वेधा स विपक्षावृत्तिरिति हेतुरेव स्यान्न सव्यभिचार इत्यर्थः । पुनश्चोदयति । न कर्त्तव्य इति । कुतः । अवधारणान्निवृत्तेः । अनुमेये सद्भाव एवेत्यवधारणेनानुमेये सद्भावस्य नियतत्वात् कुतः पक्षैकदेशवृत्तेः प्रसङ्ग इति भावः । एतन्निराकर्त्तुं यथासम्भवं विकल्पयति । अनुमेय इति । (५५ । १८) तत्र पूर्वकल्पस्य तात्पर्यं विकल्पयति । किं पुनरनेनेति । असम्भवोऽत्यन्तासम्भवो निराक्रियेति, यथा नीलं सरोजं भवत्येव, नात्यन्तं न भवतीति । न तु नीलमेव सरोजं नानीलमिति, नापि सरोजमेव नीलं नान्यदिति । अथ सम्भव इति । अन्वयपरो न व्यतिरेकपर इत्यर्थः । एतद्विकल्पद्वयं दूषयति । उभयथाऽपीति । दूषणान्तरं चाह । न चैकदेशवृत्तिरिति । न ह्यत्यन्तायोगव्यवच्छेदेनायोगो व्यवच्छिन्नो भवति, नापि सम्भवमात्रविधानेनासम्भवो व्यवच्छिन्नो भवति । ततश्चायोगाव्यवच्छेदादेकदेशवृत्तिरनुमानाभासो न व्यवच्छिन्न इत्यर्थः । स्यादेतत्, विशेष्यसङ्गतोऽयमेवकारोऽनुमेय एव सम्भव इति, यथा पार्थ एव धनुर्धर इति । न चायमन्ययोगव्यवच्छेदो विनैवकारं लभ्यते, तस्मान्न व्यर्थमवधारणमित्यत आह । उत्तरपदबाधा च । न ह्यस्ति सम्भवोऽनुमेय एवास्ति तत्तुल्ये चेति, तस्मात्तत्तुल्य इत्यस्य बाधा । चकारो नैकदेशवृत्तिर्निराकृत इति दूषणं समुच्चिनोति । अनुमेय एव सद्भावपक्षं

यथासम्भवं दूषयित्वा अनुमेये सद्भाव एवेति द्वितीयं पक्षं दू-

षयितुमुपन्यस्यति । अथोत्तरामिति ( ९५ । २३ ) तस्य प्रयोजनं दर्शयति । तस्य व्याप्तिरर्थः । सद्भाव एवेति किल विशेषणसङ्गतमवधारणप्रयोगं व्यवच्छिन्दत् व्याप्तिं दर्शयति, तथा च व्याप्तिरस्यार्थ इत्यर्थः । दूषयति । तथाऽप्यनुमेयमवधारितं सम्भवस्य व्याप्त्या न धर्म्मः सद्भावः । हेतुमाह । यत एवकारकरणं ततोऽन्यत्रावधारणमिति । मा वधारि सद्भावोऽवधार्य्यतां चानुमेये, किमेतावताऽपीत्यत आह । सम्भवव्याप्त्या चेति । ( ९५ । २९ ) अनुमेयं खल्ववधारितं सद्धेतुसम्भवं परित्यज्य नान्यत्र वर्तते, ततश्चानुमेयं हेतुसम्भवव्याप्त्याऽवधारितं भवति, हेतुसम्भवस्त्वनवधारितः सर्वत्रैव तत्तुल्ये च विपक्षे च प्रसृतः, स च कश्चित्तत्तुल्यविपक्षौ व्याप्नोति, कश्चित्तदेकदेशवृत्तिः, तदस्य हेतुसम्भवस्य विपक्षेऽपि प्रतिषेधाय युक्तमसति नास्तीति, तत्तुल्ये तु प्रसक्तमप्रतिषिद्धमनुमतमेवेति तत्तुल्ये सद्भाव इति व्यर्थमित्यर्थः । स्यादेतत् । तुल्ये हेतुसद्भावसिद्धावपि तत्तुल्ये व्याप्त्या हेतोः सद्भावो भवत्वित्येतदर्थं तत्तुल्ये सद्भाव इति वचनमित्यत आह । तत्तुल्ये चेति ( ९६ । ९ ) यदि पुनर्व्याप्तिर्विवक्ष्यते, कृतकत्वे साध्ये प्रयत्नानन्तरीयकत्वं न हेतुः स्यात्, न ह्ययं सपक्षव्यापक इति भावः । देशयति । अथ तत्तुल्य इति । दूषयितुं विकल्पयति । किं पुनरत्रेति । पूर्वस्य विरोधाद्बाधनम्, उत्तरस्य पौनरुक्त्यादिति । पूर्वपदेन सह विरोधे निदर्शनमाह । न हि भवतीति । अनुमेयसद्भाव इत्यनेनानुमेये वृत्तौ हेतोर्लब्धायां तत्तुल्य एव सद्भाव इति समुच्चीयमानावधारणं विपक्षमात्राद्वृत्तिं व्यवच्छिनत्ति, न तु अनुमेयात्,

'नरं च नारायणमेव चादौ स्वतः सुतौ द्वौ जनयां बभूव'

इति यथेति चेदत आह। तथेहापीति। समुच्चीयमानावधारणे हि तत्तुल्येन यथाऽन्ययोगव्यवच्छेदेनैवकारः सम्बध्यते तथा अनुमेयेनापि सम्बध्येत, तथा चानुमेयैकदेशवृत्तिरपि हेतुः स्यात्। न खलु नरं च नारायणमेवेति निपातो नारायणेन सहान्ययोगव्यवच्छेदेन सम्बध्यते नरेण चायोगव्यवच्छेदेनेति भावः। अथावधारणस्यावैचित्र्येण सम्बन्धमिच्छताऽनुमेये यथा अयोगव्यवच्छेदस्तथा तत्तुल्ये अयोगव्यवच्छेदेन सम्बन्ध उच्यतेति शङ्कते। अथ तत्तुल्य इति। निराकरोति। तत्तुल्य इति। एतदेव स्फोरयति। य इति। ते तत्र दर्शने। न च यस्यानुमेये सद्भाव एवेत्यनूद्य तस्य तत्तुल्य एव सत्त्वमिति विधातुं शक्यम्। न ह्यनूद्यमानं शक्यं विशेष्टुम्, तथा सति तद्विशेषणाय प्रयत्नान्तरास्थाने सति वाक्यभेदप्रसङ्गात्। यथा यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति, अत्र हि यद्यपि स्वरूपेणात्तैरशक्यप्रतिपत्तित्वेन हविषा विशेषणं मृष्यते, तथापि न शक्यं हविरुभयत्वेन विशेष्टुं विना प्रयत्नान्तरादिति वाक्यभेदभिया प्रतीयमानमप्युभयत्वमविवक्षितमेवमत्राप्यनुमेय इत्यविवक्षितम्। अथ तद्विवक्षयैव वाक्यभेदमुपेत्य पश्चाद्वाक्यैकवाक्यतयाऽभिमतार्थसिद्धिरास्थीयते। न च विरोधाद्वाक्ययोरेकवाक्यताविरहः, तत्तुल्य एवेत्यन्ययोगव्यवच्छेदस्य विपक्षमात्रविषयत्वेनाप्युपपत्तौ विरोधासिद्धेः। तस्मादन्यापोहार्थत्वेन पदानां विरोधो वक्तव्यः। तथा हि अनुमेये सद्भाव इत्यत्रानुमेय एव नाननुमेये सद्भाव एव नासद्भाव इति पदार्थः। तथा च तत्तुल्यविपक्षयोर्हेतोरभावो दर्शितः। एवं तत्तुल्यसद्भाव इत्यत्रापि तत्तुल्य एव नातत्तुल्ये सद्भाव एव नासद्भाव इति पदार्थः। तथा चानुमेये-

ऽसद्भाव इत्युक्तं भवति । न चानुमेयतत्तुल्यपदार्थयोः परस्परपरीहारवतोः समुच्चयसम्भवः । द्वयोरपि विपक्षमात्रव्यावृत्तिपरत्वात् (परस्पर)समुच्चयसद्भाव इति चेत् । न । वृक्षो गौरित्यनयोरपि हस्त्यादिनिवृत्तिमात्रपरत्वेनाभिन्नार्थयोः सामानाधिकरण्यप्रसङ्गात् । तस्माद्विरोधात् समुच्चीयमानावधारणं न युक्तमिति । न च समुच्चीयमानावधारणं दिङ्नागो मेने, यदेवमूत्रे वैशेषिकलक्षणदूषणावसरे, 'यदि रूपमेव चाक्षुषं ततो न द्रव्यं चाक्षुषं स्यात्, तथा च महदनेकद्रव्यसमवायाद्रूपाच्चोपलब्धिरिति द्रव्यचाक्षुषत्वाभिधानं व्याहन्येत'इति, अत्र हि रूपवद्द्रव्यसहितं रूपमेव चाक्षुषं न गन्धरसादीति शक्यं समुच्चीयमानावधारणम्, तस्मात् समुच्चीयमानावधारणाभिधानं कीर्तेः स्वातन्त्र्येण, तच्चायुक्तमिति(१) कृतं विस्तरेण । असति नास्तितेति दूषयति । असतीति । ( ५६ । १३ ) कस्मात्, यदसत् तत्तुच्छं स्वयमेव नास्ति, तन्न सदिति शक्यं व्यवहर्तुमसदिति ( वा )। भवतु वा तथापि, कस्मात्तस्मिन् हेतोः न व्यावृत्तिर्भवतीत्यत आह । न ह्यसदिति । यथा चैतत्तथाऽन्वयिहेतूपपादनावसरेऽस्माभिरुक्तम् । स्वरूपेण दूषयित्वा एतद्गतमवधारणं दूषयिष्यन्ननूद्य विकल्पयति । किमवधार्यत इति। प्रथमं कल्पं दूषयति । यदि तावदिति । तत्तुल्य एव सद्भाव इत्यनेन गम्यते इत्यर्थः । द्वितीयं कल्पं दूषयति । अथ पुनरिति । गौरयं विषाणित्वादित्ययं हेतुर्विपक्ष एव नास्ति, पक्षसपक्षव्यापकत्वात्, न तु नास्त्येव, विपक्षैकदेशे महिषादौ वृत्तेः, अतो विपक्ष एव नास्ति इत्ययमपि हेतुः स्यात् । तदेवमवयवार्थं दूषयित्वा समुदायार्थं दूषयितुमुपन्यस्यति । यदप्ये-

( १ ) तच्चोपयुक्तमिति २ पु० पा० ।

कद्विपदपर्युदासेनेति । तत्रैकपदपर्युदासेन त्रयः पक्षाः, द्विपदपर्युदासेऽपि त्रय इति षट्कम् । तत्पर्युदासेन सम्निकापरिग्रहः । यथाऽनुमेये सद्भाव इत्युच्यमाने यस्य तत्तुल्ये नास्तितता विपक्षे च वृत्तिः सोपि हेतुः स्यात् । यथा नित्यः शब्दः कृतत्वादिति । तत्तुल्येत्युच्यमाने विपक्षवृत्तेरपक्षधर्मस्य च हेतुत्वं स्यात् । यथा नित्यः शब्दः चाक्षुषत्वात् सामान्यवदिति । नास्तितताऽसतीत्युच्यमाने योऽपक्षधर्मस्तत्तुल्ये नास्ति स हेतुः स्यात् । यथा(१) नित्यः शब्दोऽसत्त्वात् । अनुमेये तत्तुल्ये चेत्युच्यमाने अनित्यः शब्दः प्रमेयत्वादिति विपक्षवृत्तिर्हेतुः स्यात् । अनुमेयेऽस्ति असति च नास्तीत्युच्यमाने नित्यः शब्दो जातिमत्त्वे सति श्रावणत्वादित्ययं तत्तुल्यहीनो(२)ऽपि हेतुः स्यात् । तत्तुल्येऽस्ति असति च नास्तीत्येतावत्युच्यमानेऽनित्याः परमाणवः कृतकत्वादित्ययमपक्षधर्मो हेतुः स्यात् । तदेतत्सर्वं माभूदिति समुदायोपादानप्रयोजनम् । तदेतद्दूषयति । एतदपीति । सपक्षव्याप्त्यव्याप्तिभ्यां द्विरूपयुक्तस्यान्वयिनो द्वित्वम् । सम्प्रति साङ्ख्यीयमनुमानलक्षणं दूषयति । एतेनेति । ( ९७ । १ ) सम्बन्धोऽविनाभावः साधनस्य साध्येन, तस्मात् प्रत्यक्षाद् दृढतरप्रमाणावधारितात् । तथाऽपि यत्राविनाभूते लिङ्गे भवत एकस्मिन् धर्मिणि विरुद्धाव्यभिचारिणी तयोरपि हेतुत्वं प्रसज्येतेत्यत उक्तम्, एकस्मादिति । शेषस्यानुमेयस्य सिद्धिः । अनुपपन्नत्वमात्रसाम्येनोक्तमेतेन ( न ) प्रत्युक्तमिति अनुपपत्तिं पृच्छति । कथमिति । यथासम्भवमनुपपत्तिमाह । न हीति । यदि प्रत्यक्षशब्दो ज्ञानवचनः ज्ञानं चैकत्वेन विशि-

(१) तथापि–इति पाठः ।

(२) तत्तुल्यवृत्तिहीन इति २ पु० पा० ।

च्यते तदेतद्दूषणम् । अथ सम्बन्धविशेषणमेकस्मादिति, प्रत्यक्षशब्दस्तु ज्ञेये, न तु ज्ञाने, तदेतदुपन्यस्य दूषयति । अथापि सम्बन्धादिति । शङ्कते । अथेति । सम्बन्धस्य प्रत्यक्षतोक्ता पूर्वं, न त्वनुमितिकाल इत्यर्थः । दूषयति । तथाप्यनुपलब्धसम्बन्धस्य पूर्वमनुमानकाले चानुपलब्धलिङ्गस्यानुमानं प्रसज्येतेति । स्यादेतत् । सम्बध्यत इति व्युत्पत्त्या सम्बन्धो लिङ्गं, तेनाविनाभूताद्धेतोः प्रत्यक्षादनुमेयसिद्धिरिति, तथा च गृहीताविनाभावाल्लिङ्गात्सम्प्रति प्रत्यक्षादित्युपपन्नमित्यत आह । न चान्या गतिरिति । अत्रापि व्याख्याने एकस्मादिति व्यर्थम् । तथाहि, अन्वयव्यतिरेकमात्रसम्पत्तिरविनाभाव उच्यते सर्वरूपसम्पत्तिर्वा । तत्र प्रथमे कल्पे माभूद्विरुद्धाव्यभिचारी, बाधितविषयस्तु हेतुः स्यात् । द्वितीये तु कल्पे न सर्वरूपसम्पन्नो हेतुर्विरुद्धाव्यभिचारी भवतीत्येकस्मादित्यतिरिच्यते । तस्मात्सुष्ठूक्तं न चान्या गतिरस्तीति । अव्यापकत्वं लक्षणदोषमाह । रूपेण चेति । न तावदनयोस्तादात्म्यं, भिन्नेन्द्रियग्राह्यत्वाद्भिन्नबुद्धिबोध्यत्वाच्च । न चातदात्मनोस्तयोः सम्बन्धः कश्चिदुपलभ्यते । न च प्रतिक्षणपरिणामवादे कुण्डबदरादीनामपि कश्चिदस्ति सम्बन्ध इत्यपि द्रष्टव्यम् । शङ्कते । अथेति । निराकरोति । सोपीति । न हि साङ्ख्यानां बौद्धानां वा राद्धान्तेऽस्ति सम्बन्धः समवायो नाम, नापि तदाश्रयो द्रव्यमतः स्वदर्शनव्याघात इत्यर्थः । यद्युच्यते प्राधानिकत्वाद्रूपादीनां प्रधानमेकमाश्रयः, तथा च यत्र रूपं तत्र स्पर्श इत्यत आह । यत्र रूपमिति । कुतः, न क्वचिदिति । न हि प्रधानमाधारः कार्याणामपि तु प्रधानात्मकत्वमेषामिष्यते, तथा च यत्र तत्रेत्यनुपपत्तिः, न च तादात्म्यमित्युक्तम्, न च भेदा-

भेदावेकत्र सम्भवतो विरोधादिति भावः। शङ्कते। परस्प-रेति। यथा ह्यासन्दिकाङ्गानि भिन्नान्यनौत्तराधर्य्यव्यवस्थिता-न्यपि परस्पराश्रयतया न पतन्ति, एवं रूपस्पर्शावपि परस्परा-श्रयावित्यर्थः। निराकरोति। परस्पराधारभावेऽप्यन्यत्रास-न्दिकाङ्गादौ नासौ रूपस्पर्शयोः। कुतः, न रूपं स्पर्शो न च स्पर्शो रूप इति। परस्परसंयोगप्रतिबद्धगुरुत्वान्यासन्दिका-ङ्गानि न पतन्त्यवस्थितानि परस्पराधारत्वेनोपदिश्यन्ते। रूप-स्पर्शादीनां तु स्थितिर्न परस्परहेतुकाऽपि तु भोगापवर्गलक्ष-णपुरुषार्थहेतुकेति भावः। एतेन साङ्ख्यानां सप्तविधः स-म्बन्धः प्रत्युक्तः। शेषं सुबोधम् ॥ ५ ॥

विभागसूत्रेऽनुमानानन्तरमुपमानस्योद्देशाद्यथोद्देशं च लक्ष-णादनुमानलक्षणानन्तरमुपमानलक्षणमाह। अथोपमानमिति भाष्यम्। सूत्रं पठति।

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥

अत्रापि यत इत्यध्याहार्यम्। सिद्धिः साधनम्। तदेतद्भा-ष्यकारेण व्याख्यातम्। प्रज्ञातेन प्रसिद्धेन गवा साधर्म्यात् सामान्याद्गवयस्य। साधर्म्यं च सामान्यमभिदधता न सामा-न्यातिरिक्तं सादृश्यं नामार्थान्तरमस्तीत्युक्तं भवतीति। साधर्म्यं चाप्रसिद्धं न साध्यसाधनायालमिति साधर्म्यप्रसिद्धिरपि द्रष्ट-व्या। सा च यथा गौस्तथा गवय इत्याप्तवाक्यात्। तदिदमुक्तं यथा गौरिति। साध्यसाधनपदव्याख्यानं प्रज्ञापनीयस्य गवयशब्दवाच्यतया प्रत्यक्षदृश्यमानगोसादृश्यस्य गवयत्वसा-मान्यविशेषवतः पिण्डस्य प्रज्ञापनमुपमानम्। पिण्डस्य हि गवयशब्दवाच्यतां पुरुषोऽतिदेशवाक्यस्मरणसहकारिणः प्रत्य-क्षाद्गवयगताद्गोसादृश्यात् प्रजानन् तेन प्रज्ञाप्यत इति प्रमाणव्या-

पारः प्रज्ञापनमुक्तमिति। अत्र वार्त्तिककारः प्रथमं तावत् सूत्र-तात्पर्यमाह। सूत्रार्थः पूर्ववत्। (९७।१८) समाना-समानजातीयव्यवच्छेद इत्यर्थः। साध्यसाधनमित्युच्यमाने प्रत्यक्षादिसाधने सुखादिसाधने घटे प्रसङ्गः, अत उक्तं प्रसिद्धसाधर्म्यादिति। यद्यपि प्रसिद्धसाधर्म्यमुपमानमित्युच्यमाने प्रमाणविशेषाभिधाय्युपमानपदसामानाधिकरण्यात् कारकत्वलाभस्तथापि तदाभासनिराकरणाय साध्यसाधनपदोपादानम्। तेनोपमानाभासमपाकृतं भवति। अवयवार्थं विभजते। प्रसिद्धेति। वार्त्तिककारेण बहुव्रीहिद्वयसम्भवो दर्शितः, न तु तृतीयासमासो भाष्यकारीयो निरस्तः। भाष्यकारेण हि संज्ञितया गवयप्रतिपत्तिः फलं साध्यसाधनपदवाच्यमुक्ता आक्षिप्तप्रयोज्यव्यापारत्वात्। प्रयोजकव्यापारस्य प्रज्ञापनस्य पश्चान्निष्कृष्याभिधानं कृतम्, समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इति। एतदेव साध्यसाधनपदार्थतया वार्त्तिककारो व्याचष्टे। समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थः फलम्। साध्यपदेन समाख्यासम्बन्ध उच्यते, तस्य साधनं सिद्धिः प्रतिपत्तिरिति। ननु प्रतिपद्यतामयं गोसादृश्ययुक्तं गवयं, समाख्यासम्बन्धप्रतिपत्तिस्तु कुतस्त्या, न हि यो यत्सदृशं यं प्रतिपद्यते स तस्य समाख्यामप्यवगच्छतीत्याशयवान् पृच्छति। किमुक्तं भवति। उत्तरम्, आगमेति। आगमानुभवाहितात्संस्कारात् स्मृतिः। एतदुक्तं भवति। न केवलं सारूप्यज्ञानं समाख्यासम्बन्धप्रतिपत्तिहेतुरपि त्वागमार्थस्मृत्यपेक्षमिति। नन्वसत्यागमानुभवे कुतः स्मृतिरित्यत आह। यदा ह्यनेनेति। (९८।१) प्रसिद्धसाधर्म्यादित्यत्र प्रसिद्धिरुभयी श्रुतिमयी प्रत्यक्षमयी च। श्रुतिमयी यथा गौरेवं

गवय इति । प्रत्यक्षमयी च यथा गोसादृश्यविशिष्टोऽयमीदृशः पिण्ड इति । तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्यपेक्षा समाख्यासम्बन्धप्रतिपत्तिहेतुः । यद्यपि यथा गौरेवं गवय इत्येतस्मादपि गोसदृशस्य गवयशब्दः समाख्येति शक्यमवगन्तुम्, न खलु प्रत्यक्ष एव संज्ञाकर्म, समानासमानजातीयव्यवच्छिन्ने हि तद्भवति । तच्च यदि मानान्तरेणापि तथाऽवगम्यते कस्तत्र संज्ञाकर्म निवारयेत् । गोसादृश्येन चोपलक्षितः पिण्डो य इति च सर्वनाम्ना परामृष्टः शक्यो घटादिभ्योऽसमानजातीयेभ्यो माहिषादिभ्यश्च समानजातीयेभ्यो व्यवच्छिन्नोऽवगन्तुं गवयस्तथापि यावदयमसौ गवय इति साक्षात्प्रतीते सम्बन्धिनि संज्ञां न निवेशयति तावदयं परिप्लुतमतिः प्रमाता कश्चित् खलु द्रक्ष्यामि तादृशं पिण्डं यत्र गवयसंज्ञां प्रतिपत्स्य इति प्रमोत्सुक एवोदीक्षेत् । न चासौ वाक्यमात्रसहायोऽप्रत्यक्षीकृतगोसदृशगवयपिण्डोऽयमसौ गवयाख्य इति प्रतिपत्तुमर्हति । न च वाक्यं विना प्रत्यक्षमात्रात् । तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयम् । ननु यदोदीच्येन क्रमेलकं निन्दतोक्तं धिक्करभमतिदीर्घवक्रग्रीवं लम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामिति, तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ करभ इत्यवैति, तत्कतमदेतेषु प्रमाणम् । न तावदुपमानं साधर्म्याभावात्, नापि पञ्चमं प्रमाणमुपगम्यते । यद्युच्येत निन्दापरं वाक्यं करभस्य तादृशत्वे न प्रमाणं, न ह्यन्यपराच्छब्दादन्यस्यावगम इति । तत्र तर्हि तादृक्त्वे पर्यवस्यति वाक्यं तत्र का गतिः । अथ तत्रापि तादृक् करभ आगमावगतः प्रत्यक्षेण प्रत्यभिज्ञायते करभशब्दवाच्यता च तस्य तत्पूर्व

तादृक्करभपरत्वेऽप्यागमस्य प्रयोगमात्रादवगताऽनुमानात्। यो हि यत्र प्रयुज्यते शब्दोऽसति वृत्त्यन्तरे स तस्य वाचको यथा गोशब्दो गोत्वे, प्रयुक्तश्चायं तादृशि करभशब्दः तस्मात्तत्पिण्डस्य वाचक इति। यदिदं प्रागेव प्रयोगानुमितं वाचकत्वमस्य प्रत्यक्षसमये केवलं स्मर्यत इति, समानमेदुपमानवाक्येपि। तत्रापि वाक्यादवगतसाधर्म्यवान्पिण्डः प्रत्यक्षेण प्रत्यभिज्ञायते, प्रयोगानुमितं च गवयशब्दवाच्यत्वं स्मर्यते इति न फलान्तरमवशिष्यते यत्रोपमानं प्रमाणान्तरमिति। अत्रोच्यते। न तावदाकाशादिशब्दवदेष गवयशब्दः साक्षात्पिण्डस्य वाचकः, किं तु गवयत्वं निमित्तीकृत्य पिण्डे वर्तते इति परमार्थः। न च यथा गौरेवं गवय इति वाक्याद्गवयत्वमवगतं, न ह्यनवगतसम्बन्धं गवयपदमेतदवबोधयति(१)। ततस्तदवगमात्सम्बन्धवेदने परस्पराश्रयप्रसङ्गः। न च गोसादृश्येनोपलक्ष्यते। न खल्वनुपलब्धचरेण गवयत्वेन गोसादृश्यं सम्बद्धं दृष्टं, न चादृष्टसम्बन्धमुपलक्षकम्। न हि पुरुषेणादृष्टसम्बन्धो दण्डः पुरुषमुपलक्षयितुमर्हति। तस्मात्सम्बन्धिनो गवयत्वस्य सर्वथाऽनुपलब्धेः कुतो वाक्याद्वानुमानाद्वा वाच्यवाचकसम्बन्धावगमः। कुतस्तराञ्च सम्बन्धस्मृतिः। गवयत्वसामान्यविशेषवति च पिण्डे प्रत्यक्षे युक्तः सम्बन्धावगमः, सम्बन्धिनो गवयत्वस्य प्रत्यक्षत्वात् वाक्यार्थस्य स्मर्यमाणत्वात्। तथापि किं गवयत्वजातिमान् पिण्डो वाच्यः (न चादृष्टगोसादृश्यवानिति(२)) कुतो विनिगमनेति चेत्, वाक्यार्थस्मरणसहकारिगवयत्वजातिमतः पिण्डस्य गोसादृश्यदर्शनमेव तर्कसहायं गवयत्वाभिधाने प्रमा-

(१) गवयपदमवधारयति इति पाठः।
(२) उत गोसादृश्यवानिति २ पु० पाः।

णं, तर्कश्च गोसादृश्यविशिष्टपिण्डाभिधाने कल्पनागौरवप्रसङ्गः। तथा हि सादृश्यविशिष्टपिण्डाभिधानं नाप्रतीतं सादृश्यं पिण्डं विशिनष्टीति तत्प्रतिपत्तव्यम्। न च शब्दादन्यतस्तदवगम इति शब्दस्य तत्र वाचकत्वं कल्पनीयम्। न चाविशिष्टं सादृश्यं पिण्डविशेष एव गवयपदमत्रस्थापयितुमर्हति, यस्यकस्यचिद् येनकेनचित् सादृश्यादिति तदपि गवा विशेषणीयम्। न चान्यतो गोत्वस्यापि प्रतीतिरिति तदपि गवयपदेनाभिधातव्यमिति कल्पनागौरवम्, गवयत्वजातिमत्पिण्डाभिधाने तु लाघवमिति तदनुजानाति। साधर्म्यग्रहणं च धर्ममात्रोपलक्षणमिति करभसंज्ञाप्रतिपत्तिरप्युपमानफलमेवेति नाव्याप्तिः। नापि पञ्चमप्रमाणाभ्युपगमः। अत एव बहून्युदाहरणान्युक्त्वाप्याह स्म भगवान् भाष्यकारः, एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति। तस्मात्सर्वं चतुरस्रम्। तदीदृशमुपमानफलमविद्वान् सादृश्यज्ञानं सादृश्यविशिष्टज्ञानं वोपमानफलमिति भ्रान्तो भदन्तो दिग्नाग आक्षिपति। प्रत्यक्षेति। पृच्छति। कथमिति। (५८।४) उत्तरं यदा ताविति। उपलक्षणं चैतत्, उभौ प्रत्यक्षेण पश्यतीति। यदापि गवयमेकं प्रत्यक्षेण पश्यति स्मरति च गां, तदापि गोसादृश्यं गवयस्य प्रत्यक्षमेव। गोस्थमप्रत्यक्षमप्रत्यक्षत्वाद्गोरिति चेत्। हन्त भोः किमभिमतं सादृश्यमायुष्मतां यदप्रत्यक्षायां गवि न प्रत्यक्षम्। सामान्यबाहुल्यं जात्यन्तरवर्त्ति जात्यन्तरस्य, यथाऽऽहुः—

'सामान्यान्येव भूयांसि गुणावयवकर्मणाम्।
भिन्नप्रधानसामान्यव्यक्तं सादृश्यमुच्यते॥'

इति चेत्। तत्किमिदानीं कर्णत्वादिसामान्यं गोगवयगतकर्णादिव्यक्तिभेदेन भिन्नमित्यपि वक्तुमध्यवसितोऽसि। तस्माद्य-

था कालाक्ष्यां गवि गोत्वमीक्षितवतः स्वस्तिमत्यां प्रत्यभिज्ञायमानं तदित्यत्रगतं भवति तथेहापीति न फलातिरेकः । तस्मान्न सादृश्यप्रतीतिफलमुपमानं प्रत्यक्षाद्वाक्याद्वा व्यतिरिच्यत इति सूक्तम् । भदन्तभ्रान्तिमुद्घाटयति । गवेति । गवयसत्तां सादृश्यविशिष्टामित्यर्थः । अर्थतत्वमुक्तं स्मारयति । गवयेति । उपसंहरति । तस्मादिति । प्रयोगस्तु प्रत्यक्षादिभ्यः प्रमाणान्तरमुपमानं तज्जन्यप्रमाविलक्षणप्रमाजनकत्वात् । यदि न तेभ्यो विलक्षणमभविष्यद् न तद्विलक्षणां प्रमामकरिष्यत् । यथा तान्येव । न चैतत्तथा । तस्मात्तथेति ॥ ६ ॥

अथ शब्द इति भाष्यम् । उपमानानन्तरं शब्दोद्देशादुपमानलक्षणानन्तरं शब्दस्य लक्षणमित्यर्थः । लक्षणसूत्रं पठति ।

आप्तोपदेशः शब्दः ॥ ७ ॥

अत्र(१) शब्द इति लक्ष्यपदम् । आप्तोपदेश इति लक्षणम् । उपदिश्यतेऽनेनेत्युपदेशो वाक्यज्ञानं तदर्थज्ञानं वाभिधीयते, तत्र वाक्यज्ञानप्रामाण्यपक्षे तदर्थज्ञानं फलम्, पदार्थस्मृत्यादयस्त्वान्तरालिका इतिकर्तव्यता । तदर्थज्ञानप्रामाण्यपक्षे तु हानादिबुद्धिः फलम् । यद्यपि विधिरुपदेशः प्रवर्तनमित्यनर्थान्तरम् । यद्यपि चायं नियोज्यप्रयोजने प्रवृत्तिनिवृत्ती विदधदाज्ञा(प्रार्थना)ध्येषणाभ्यामतिरिच्यते । ते हि नियोक्तृप्रयोजने प्रवृत्तिनिवृत्ती विदधतः, तथापि भूतार्थपरोपनिषदादिशब्दाव्यापकत्वात् परप्रयोजनवद्वचनमात्रविवक्षयोपदेशपदं व्याख्येयम् । यद्यपि सदेव सौम्येदमग्र आसीदित्यादि वचनं क्वचिन्न प्रवर्तयति कुतश्चिद्वा न निवर्तयति पुरुषं तथापि पुरुषश्रेयोऽभिधत्त इत्युपदेश इत्युच्यते । तथाप्यतिव्याप्तिश्चैत्यवन्दनादिवाक्यानामप्येवंलक्षणत्वा-

(१) अन्वयेति १-२ पु० पा० ।

दत उक्तमाप्तेति । आप्तानामृष्यार्यम्लेच्छानामुपदेशः शब्दो न त्वनाप्तानां मायामोहनिर्मितानां बुद्धर्षभादीनां प्रमाणविरुद्धक्षणिकसर्वधर्मनैरात्म्यवादिनामिति । तदेवाह वार्तिककारः । न शब्दमात्रमिति सूत्रार्थः । ( ५८ । १६ ) सूत्रस्थाप्तलक्षणपरं भाष्यम् । आप्तः खलु साक्षात्कृतधर्मा । सुदृढेन प्रमाणेनावधारिताः साक्षात्कृता धर्माः पदार्था हिताहितप्राप्तिपरिहारार्था येन स तथोक्तः । तथापि तत्त्वं विद्वानकारुणिकतया अलसतया वाऽनुपदिशन् मत्सरितया वा विरीतमुपदिशन् आप्तः स्यादित्यत आह । यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः । यथादृष्टस्येति । मत्सरितया विपरीतोपदेशो निवारितः । चिख्यापयिषैयेसकृपाभ्यास(१)कारिते निराकृते इति । प्रयुक्त उत्पादितप्रयत्न इत्यलसत्वम् । तथापि स्थानकरणपाटवाभावेन वर्णनिष्पादनासामर्थ्येऽनाप्तः प्रसज्येतेत्यत आह । उपदेष्टा । स्थानकरणपाटववानित्यर्थः । आप्त इति प्रकृतिप्रत्ययसमुदायात् प्रकृतिं निष्कृष्य तदर्थमाह । साक्षात्करणामिति । अनेन चोक्तस्वरूपसम्पदुपलक्षिता । प्रत्ययार्थमाह । तयेति । आप्तलक्षणस्य व्यापकत्वमाह । ऋषीति । दर्शनादृषिः करतलामलकफलवत् साक्षात्कृतत्रैकाल्यवृत्तिप्रमेयमात्रः । आराद्यातः पातकेभ्य इत्यार्यो मध्यलोकः । म्लेच्छाः प्रसिद्धाः । म्लेच्छा अपि हि प्रतिपथ(२)मवस्थिताः पान्थानामपहृतसर्वस्वा मार्गाख्याने हेतुदर्शनशून्या भवन्त्याप्ता इति । तदनेनाप्तं दोषक्षयं विदुरिति परेषामाप्तलक्षणमव्यापकमुक्तं भवति । तदेतद्भाष्यमाक्षेप्तुमनुभाषते । आप्तः खल्विति । (५८ ।

(१) अकृपालसेति पु० पा० ।

(२) परिपन्थ-पाठः ।

१६ । ) आक्षिपति । स्वर्गेति ! आक्षेप्ता भाष्यमाक्षिप्य सूत्रं समाधत्ते । आप्तः । प्राप्तो युक्त इति यावत् । अपौरुषेयो वैदिक उपदेशः स्वर्गापूर्वदेवताविषयः स्वतःप्रामाण्ये सिद्धे निर्दोषतया युक्त उपपन्नः, लौकिकश्चार्यम्लेच्छानां प्रमाणान्तरमूलो युक्तः, मानान्तराभावे तु अनाप्तोऽयुक्त इत्यर्थः । समाधत्ते । न ब्रूम इति । पौरुषेयत्वं वेदानां द्वितीयाध्याय उपपादयिष्यते । तस्मात्पुरुषस्यैवाप्तोपदेश इति साधु व्याख्यानं भाष्यकारीयमिति भावः । पृच्छति । कः पुनरिति । अस्ति स्वर्गादीनामप्रत्यक्षत्वे न्यायः, योगिप्रत्यक्षं न स्वर्गादिविषयः प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति भावः । उत्तरम् । ब्रूमो न्यायम् । तमाह । सामान्यविशेषवत्त्वात् कस्याचित् प्रत्यक्षा इति । अत्र यावति पक्षे यो हेतुः सिद्धस्तस्य तन्मात्रं पक्षीकार्यम् । योगजे च प्रत्यक्षे सिद्धे तत्साधकादेव प्रमाणात्तस्य स्वर्गादिविषयत्वमपि सिद्धमिति धर्मिग्राहकप्रमाणविरुद्धं मीमांसकानामनुमानं नोदेतुमप्युत्सहते प्रागेव तद्बाधितुम्, असिद्धे तु योगजे प्रत्यक्ष आश्रयासिद्धो हेत्वाभासः, अस्माकं तु सम्यञ्चो बहवश्च न्याया इति भावः । अनित्यत्वं हेतुमाक्षिपति । असिद्धमिति । ( ५९।४ ) परिहरति । नेति । नित्ये वाऽपूर्वे इति । अत्र त्रयः कल्पाः, किमेकमपूर्वं सर्वपुरुषसाधारणमाहो असाधारणं, यदा त्वसाधारणं तदापि किं प्रतिपुरुषमेकैकमसाधारणमाहो प्रतिपुरुषमनेकमिति । तत्र प्रथमं कल्पं दूषयति । यदि साधारणेति । न हि कदाचिदप्ययमपूर्वं पश्यति ( ५९ । १९ ) लौकिकः पुरुषो योगिनस्त्वनभिव्यक्तमपि पश्यन्तीति भावः । द्वितीयं कल्पं दूषयति । एतेन प्रतिपुरुषमिति । (५९ । २५) उत्कर्षः (६० । २ ) आधिक्यमवयवोपचय इति यावत् । शङ्कते । व्यञ्जकेति ।

एकमपि व्यञ्जकभेदादुत्कर्षवान्निकर्षवद्दृष्टं, यथा महति दर्पणे म-हन्मुखं तदेव कनीनिकायामणीयः इति भावः। वक्ष्यमाणाभिप्रायेण निराकरोति। न ह्येकमिति। शङ्किता स्वाभिप्रायमुद्घाटयति। ननु चेति। स्वाभिप्रायेण निराकरोति। न दृष्ट इति ब्रूम इति। शङ्किता पृच्छति। किं पुनस्तत् यदि न दृष्टं, तद्यदि भेदेन न दृष्टं दृष्टिर्नास्ति किम्पुनस्तद्यद्भेदेन भेददर्शनमिव भास-ते। समाधाता स्वाभिप्रायमाह। मिथ्याप्रत्यय इति। न भे-ददर्शनमपजानीमहे, किन्तु पारमार्थिकं भेदं, न च कल्पितोऽपूर्व-भेदः पारमार्थिकाय कार्यायालमिति भावः। उत्कर्षापकर्षहेतु-त्वं कर्मण इति शेषः। तृतीयं कल्पमातिष्ठते। प्रतिपुरुषमने-कमिति। दूषयति। अनिवृत्त इति। अथोत्तरकालमिति। अश्वमेधक्रियया तावदपूर्वं स्वकाल एवाभिव्यक्तं फलदाना-भिमुखीकृतमभिव्यञ्जकसमानकालत्वादाभिव्यक्तेः प्रदीपादिषु दर्शनात्। तथापि फलं तावन्न दत्ते यावत् क्रिया न निवर्तते, निवृत्तायां तु फलं दत्त इत्यर्थः। दूषयति। असतीति। त-त्खलु पूर्वं सदपि फलं नाकार्षीच्चरमभाविन्याः क्रियायास्तज्ज-न्याया वाभिव्यक्तेरनुत्पादादुत्पन्नायां तु क्रियायामभिव्यक्तौ वा कस्मान्न करोति। न हि क्रियाविनाशस्य कश्चिदुपयोगः, तस्मा-दकामेनापि त्वयाऽसत्या एव क्रियाया व्यञ्जकत्वमनुग्राहकत्वं चाङ्गीकर्तव्यं, तच्चैतदुभयमपि चित्रमित्यर्थः। अपि च साऽसती चेत्क्रियाऽभिव्यनक्ति तथा सत्यसत्तायाः सर्वत्र सुलभत्वान्न किंचिदपूर्वं नाभिव्यक्तमिति क्रियाविलोपः प्रयत्नविलोप इत्यर्थः।

अत्र शब्दं प्रमाणान्तरमसहमानो दिग्नागस्तल्लक्षणं विक-ल्प्याक्षिपति। आप्तोपदेश इति। अन्यस्मादन्यस्य निश्चयो न

तावदसम्बन्धादतिप्रसङ्गात् । न च शब्दोऽर्थात्मा, नाऽप्यर्थकार्यः, विनाप्यर्थं पुरुषविवक्षामात्रादेव तदुत्पादात् । तस्मान्न साक्षाच्छब्दादर्थनिश्चयः । विवक्षाकार्यतया तु विवक्षां गमयेत् । सा चार्थाभिप्रायपूर्वा, अभिप्रायश्च कश्चिन्मनोमात्रयोनिरपरस्तु प्रमाणमूलः, तत्र यः प्रमाणनिश्चितमर्थं विवक्षति, यथाविवक्षमुच्चारयति, स आप्तः, तस्य वचनात् कार्यात्कारणं विवक्षानुमीयते, तस्याश्च कारणमर्थज्ञानं, ततश्चार्थः, तज्ज्ञानस्यार्थकार्यत्वादिति प्रमाणगतिः । तत्राप्तोपदेश इत्यत्रोपदेश इत्यत्रोपदेशक्रियया उपदेष्टार उपस्थापितास्ते च प्रायेण विसंवादका दृष्टा इत्याप्तग्रहणेन तेषामविसंवादित्वं ततश्चोपदेशादर्थनिश्चयो भवत्वित्येतदर्थं यदुच्यते इत्याह । यद्याप्तानामिति । उपदेष्टृणामित्यर्थः । इमं कल्पं दूषयति । तदनुमानात् । अविसंवादित्वमुपदेष्टुरानुमानिकं तादृशस्य वचनमर्थनिश्चये अनुमानमेव । तथा हि । यद्यन्निर्दोषसत्त्वीयं वचनं तत्सर्वमर्थवत्, यथा बुद्धस्य क्षणिकनैरात्म्यादिविषय उपदेशः, तथा चायं विवादाध्यासित उपदेश इति । यथोक्तं भदन्तेन,

'आप्तवाक्याविसंवादसामान्यादनुमानता ।' इति ।

द्वितीयं कल्पमातिष्ठते । अथार्थस्य तथाभावः । अत्र हि उपदिश्यत इति व्युत्पत्त्योपदेशोऽर्थ उच्यत इति आप्त उपदेशो यस्मात्स तथोक्तः । एतदुक्तं भवति । यस्माच्छब्दादवगम्यार्थं प्रवर्तमानः प्राप्नोति तमेवार्थं स आप्तोपदेशः शब्दः प्रमाणम् । एवं शब्देन योऽर्थो दर्शितस्तस्याप्तया तथाता दर्शिता । तदिदमुक्तमर्थस्य तथाभाव इति । दूषयति । सोऽपीति । तदेव स्फुटयति । यदा हीति । (६१ । १) आप्तया हि तथात्वं विनिश्चिन्वन् अर्थस्य नाप्रतिपन्नया तया निश्चेतुमर्हति, प्रतिपत्तिश्च प्रायेण प-

त्, न्यथासिद्धस्य तु तद्विशेषणत्वायोगिनो हेतुत्वासिद्धिमा त्रेण पाध मेऽन्तर्भाव इति सर्वमदातम् ।

संदल त । सोऽयमिति । ( १७९ । ४ ) त एतेऽसिद्धभेदा उदाहरणभेदे प द्रष्टव्याः यथा नित्यः शब्दः चाक्षुषत्वादिति अयमसिद्धः । भुवनादीनामकर्त्तेश्वरोऽशरीरत्वादित्याश्रयासिद्धः । स श्याम मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यन्यथासिद्धः अन्नपानपरिणतिभेदनिबन्धनत्वाद्रूपभेदस्यान्यथासिद्धत्वमिति अयमप्यसिद्धत्वादिति भाष्ये अपिशब्देनाश्रयस्य च्छायाः सत्त्वेनासिद्धिः सूचिता ।

अत्र भदन्तेनेदं ध्यसमलक्षणमुदाहरणान्तरं कल्पयित्वा दूषितम् । इदं किलोदाहरणं नित्यः शब्दोऽस्पर्शत्वात् बुद्धिवदिति । तदेतन्नि ऽप्यसिद्धं न भवतीति दूषयित्वा भदन्तेन शङ्कितम्, अथ ाध्येनाविशिष्टो दृष्टान्तो यस्मिन्स साध्याविशिष्टो हेत्वाभास इति बुद्धेर्दृष्टान्तस्य नित्यत्वेनासिद्धत्वादित्याशङ्क्य बहुव्रीह्यभावे दूषितम् । तदेतत्सर्वमनभ्युपगमेन वार्त्तिककारो दूषयति । नित्यः शब्द इति । यद्येतन्नोदाहरणं, किमुदाहरणं को वा सूत्रार्थ इत्यत आह । यथा त्वस्माभिरिति । अयं भदन्तोक्तो दोष इत्यर्थः । कस्मादित्यत आह । भदन्तेन सूत्रार्थो न विज्ञातः, न हि सव्यभिचारोऽनेन लक्ष्यते । येन सव्यभिचारमस्पर्शवत्त्वमस्योदाहरणं स्यात्, किं तु साध्यसमः, नापि व्यधिकरणबहुव्रीहिदूषणेनाऽक्षरार्थो ज्ञातः, नापि बुद्धिवदिति दृष्टान्ताभासमेव हेत्वाभासं कुर्वता हेत्वाभासदृष्टान्ताभासौ ज्ञातौ भदन्तेनेत्यर्थः ॥ ८ ॥

काला-तः ( सू. ९ ) ॥ अत्र कालातीत इति लक्ष्यनिर्देशः, कालात्ययापादिष्ट इति लक्षणम् हेतोरपदेशस्य हि

साध्यसंदेहविशिष्टःकालः, यथाऽऽहुः नानुपलब्धे न निर्णीते न्यायः प्रवर्त्तते अपि तु संदिग्ध इति । परे ऽप्याहुः संदिग्धे हेतुवचनादिति । यत्र च प्रत्यक्षानुमानागमविरोधोऽनुष्णोऽग्निर्द्रव्यत्वादिति, अश्रावणः शब्दो गुणत्वादिति च, शुचि नरशिरःकपालं प्राण्यङ्गत्वादिति च, स सर्वः प्रमाणतो विपरीतनिर्णयेन संदेहविशिष्टं कालमतिपततीति सोऽयं कालस्यात्ययेनापदिश्यमानः कालातीत इति । तथा चोदाहृतम् यत्तु प्रत्यक्षागमविरुद्धं न्यायाभासः स इत्यत्र वार्त्तिककृता । बाधाविनाभावयोः सहासंभव इति चात्र बौद्धानामाक्षेपोऽस्माभिः समाहितः । एवं व्यवस्थिते भाष्यकारः सूत्रं स्वपरमतश्लिष्टं व्याचष्टे, कालात्ययेन संशयकालात्ययेन युक्तो यस्यार्थैकदेशः, धर्मविशिष्टो हि धर्म्मी हेतोरपदिश्यमानस्यार्थः, सह्यर्थ्यते हेतुना, तस्यैकदेशः साध्यधर्मः, स धर्मिणि बलवता प्रमाणेन तद्विपरीतधर्मनिर्णयं कुर्वता संशयकालमतिपातितः, स तादृशो हेतुः कालात्ययापदिष्टः कालातीत इति स्वमतेनास्यार्थः । अत्र च पूर्वमेवोदाहृतमिति पौनरुक्त्यान्नोदाहृतम् ।

परमते तु कालात्ययेन युक्तो यस्य हेतोरनुरूप एकदेशो हेतुविशेषणमिति यावत्, स कालात्ययापदिष्ट इति योजना । परमतेनैव निदर्शनमाह । निदर्शनमिति । नित्यत्वं चात्रावस्थानमात्रमभिमतमिति । अन्यथा घटादिभिरालोकसंयोगव्यङ्ग्यैर्व्यभिचारः । तदेतत् पञ्चावयवं वाक्यमुपन्यस्य संयोगव्यङ्ग्यत्वस्य हेतोरेकदेशस्य विशेषणस्य संयोगस्य व्यक्तिकालात्ययेन हेत्वाभासतामाह । अयमहेतुरिति । स पुनरयमसिद्धविशेषणतया हेत्वाभासः साध्यसम एवेति न पृथग्वाच्य इति स्थूलतया एष दोषो भाष्यकारेण नोद्भावितः ।

यत्पुनर्भदन्तेन कालातीतस्य व्याख्यानं कृतं प्रतिज्ञानन्तरं हि हेतोः कालः तमतीत्य हेतुः पश्चादपदिश्यमानः कालातीतो भवति, तद्यथाऽनित्यः शब्दो घटादिवदित्युक्ते कस्मादित्यनुयुक्तो ब्रूते कृतकत्वादिति, स कालातीत इति। तेन चैवं दूषितं, किं निराकाङ्क्षे वादिन्येष प्रतिवादिनः प्रश्नः, आहो साकाङ्क्षे, यदि निराकाङ्क्षे तदा न्यूनमेवास्य निग्रहस्थानं न हेत्वाभासस्तस्याप्रयोगात्। प्रयुक्तो हि हेतुस्तदाभासो वा स्यान्नाप्रयुक्तः। अथ साकाङ्क्ष एव वादिनि प्रतिवादिनः प्रश्नस्तथाऽपि पश्चादप्यसौ हेतुः प्रयुक्तो हेतुरेव, न ह्यसौ तदा न स्वसाध्याविनाभूतोऽपक्षधर्मो वेति। तस्मान्न कालातीतो नामास्ति हेत्वाभास इति। तदेतद्भदन्तदूषणमेतद्व्याख्यानानभ्युपगमेन परिहरति। अवयवविपर्यासवचनं त्विति। अनभ्युपगमहेतुं पृच्छति। कस्मादिति। उत्तरं यस्येति। अर्थेन सामर्थ्येन सम्बन्धो ऽर्थसंबन्धः। अपि च पौनरुक्त्यादपि नाभ्युपगम्यत इत्याह। अवयवेति। यस्यापदिश्यमानस्येत्यादि पुनरुच्यते इत्यन्तं वार्त्तिकं भाष्यव्याख्यानेनैव व्याख्यातम्। शङ्कते। समीकृतेऽभिधानादिति। ( १७६।१ ) अयमर्थो नैतदप्राप्तकालेन निग्रहस्थानेन पुनरुक्तम्. अपि तु हेत्वाभास एव। स ह्यवयवविपर्यास उच्यते यत्रैकग्रन्थेनैव वादी प्रतिज्ञोदाहरणादि प्रयुज्य पश्चाद्धेतुं प्रयुङ्क्ते। एष तु प्रतिज्ञोदाहरणे प्रयुज्य विरतः प्रतिवादिनाऽनुयुक्तः पश्चाद् हेतुं प्रयुङ्क्ते। तस्माद् न्यूनतादूषणेन पक्षे समीकृते पक्षमात्रतां नीते सिद्ध्यवस्थातः प्रच्याविते पश्चादभिधानाद्धेतोरेष कालातीतो हेत्वाभासो न पुनरप्राप्तकालं-निग्रहस्थानमिति चेदिति। निराकरोति यदीति। हेत्वनभिधानेन न्यूनतया समीकृतः पक्षः, किमत्र हेतोरसामर्थ्यं, न ह्यप-

दोषेणान्यो युज्यत इत्यर्थः । शङ्किता ब्रूते । एतदस्येति । निराकरोति । नैतदिति । न्यूनतया निगृहीतो यदि पश्चादभिधानेन निग्रहीतव्यः, ततो वाच्येत्र निगृह्यताम् । न त्वयं पश्चादभिहित इति समर्थः शक्यो हेतुर्निग्रहीतुमिति नायं समीकृताऽभिहितत्वेनापि हेत्वाभास इत्यर्थः । उभयानिराकरणमुपसंहरति तस्मादिति ॥ ९ ॥

उद्देशक्रमानुरोधेन लक्षणक्रमस्य हेत्वाभासानन्तरं छलस्योद्देशाच्छललक्षणस्यापि हेत्वाभासलक्षणानन्तर्यमाह भाष्यकारः । अथ छलम् ।

वच–लम् ( सू. १० ) ॥ यथा वक्तुरभिमतोऽर्थः ततो विरुद्धोऽर्थस्तस्य विकल्पः कल्पना सैवोपपत्तिः तया । अथ लक्षणान्तरवच्छलस्य सामान्यलक्षणे कस्मादुदाहरणं न दीयत इत्यत आह । न सामान्यलक्षणे इति ।सामान्यविशेषवत् सर्वमुदाहरणं, निर्विशेषस्य सामान्यस्यासत्त्वेन केवलस्य सामान्यस्योदाहरणमशक्यमित्यर्थः । विभागे त्विति । विभज्यत इति विभागो विशेषलक्षणं, तस्मिन्नुदाहरणानि ॥ १० ॥

छलसामान्यलक्षणमभिधाय तद्विशेषलक्षणान्यभिधातुं प्रथमं तावन्न्यूनाधिकसंख्याव्यवच्छेदार्थं विभागमवतारयति । विभागश्चेति । विभज्येत ऽनेनेति विभागः सूत्रमुच्यते ॥११॥

तत्र च विशेषलक्षणमवतारयति । तेषां–छलानां मध्ये वाक्छलं लक्ष्यते–

अवि लम् ( सू. १२ ) ॥ नवः कम्बलो यस्येति एको विग्रहो नव कम्बला अस्येति अपर इति विग्रहे विशेषः । वाक्छलशब्दार्थं व्युत्पादयति । वाचि निमित्ते छलं वाक्छलमिति । नवकम्बल इति उभयत्रापि समानायां वाचि निमित्त-

भूतायामित्यर्थः। तदेतच्छलं पराजयावस्थायां जल्पे प्रयोक्तव्यमित्युक्तम्, परवाक्ये पर्यनुयोगोऽस्येति चोक्तम्, तदत्र यथा पर्यनुयोगः तथा दर्शयति शिष्यहिततया भाष्यकारः अस्य प्रत्यवस्थानमिति। उभयार्थभानेऽसम्भवदर्थकल्पनमयुक्तमित्यर्थः। अथ प्रयोक्ताऽपि कथं साधारणेन शब्देनार्थविशेषं बोधयति, अबोधयँश्च कथं प्रतिपादको नामेत्यत आह। प्रसिद्धश्चेति। सम्बन्धस्वरूपमाह। अभिधानाभिधेययोर्नियमो ऽयमेव शब्दोऽस्यैवार्थस्येति तत्र यः पुरुषस्य नियोगोस्मादयमेव बोद्धव्य इत्येवमाकारः। किमतो यद्येवमत आह। प्रयुक्तपूर्वश्चेति। तथाऽपि किमित्यत आह। प्रयोगश्चेति। तामिमां भूमिरचनां प्रकृते योजयति। तत्रैवमर्थगत्यर्थ इति। एतदुक्तं भवति। न सङ्केतकरणावस्थायां वृद्धव्यवहारे वा कश्चिच्छब्दः कश्चिदर्थं शृङ्गग्राहिकया बोधयत्यपि तु सामान्यद्वारेणार्थप्रकरणादिसहकारी विशेषे वर्त्तते। तस्मान्नैष प्रतिपादयितुरपराधो यदेष विशेषशब्दैर्विशेषान्न प्रतिपादयति। किं तु सङ्केतस्यापराधो यो विशेषमपहाय सामान्ये शब्दानां वर्त्तते। तस्माद्यथासङ्केतं बोधयन्नापराध्यः प्रयोक्तेति सिद्धम्। सामर्थ्यमेव दर्शयति। यत्रार्थक्रियाचोदनेति।

स्यादेतदविशेषाभिहितेऽर्थ इति न युक्तं, न हि नवकम्बल इति पदं प्रकरणादिनिरपेक्षं कञ्चिदर्थमविशेषेणाभिधत्ते गवादिशब्दवत्। न हि सङ्ख्याविशेषे च नवीनत्वे चास्ति कश्चित् सामान्यविशेषो बाहुलेयादिष्विव गोत्वं यमभिदधीतेत्यत आह वार्तिककारः, सामान्यश्रुतीति। अभिहितिरभिहितम्, उच्चारणमिति यावत्। समानः शब्दो नार्थे सामान्यामित्यर्थः। अश्व इति नामप-

दमश्वत्वस्य वाचकम्। आख्यातपदं यदा कस्य चिदभिमुखं प्रयुज्यते अश्व इति तदा वृद्धिं गतोऽसीति प्रतीयते। चोदयति। अविशेषेति। समानो हि शब्दोऽभिधेये संशयमाधत्ते न त्वर्थमभिधत्त इत्यर्थः। परिहरति। न प्रकरणादीति। (१७-७।२) श्वेतो धावतीति इतः सारमेयो द्रुततरं याति श्वित्री निर्णेनेक्तीत्यर्थः। अर्थ इत्यस्य प्रयोजनमाह। अर्थग्रहणमिति। अविशेषश्रुतौ शब्दे सति अर्थे अर्थान्तरकल्पना न शब्द इत्यर्थः। अस्य प्रत्यवस्थानमित्यादिभाष्यं व्याचष्टे। तस्येति। सुगमम्॥ १२॥

संभव-लम् (सू. १३ सम्भवतोऽर्थस्य ब्राह्मणविशेषस्य विद्याचरणसंपदा, विद्याचरणसंपदमत्येति यत्सामान्यं ब्राह्मणत्वं व्रात्ये ब्राह्मणे, तस्य ब्राह्मणत्वस्यातिसामान्यस्य योगादसम्भूतार्थकल्पनया यः प्रतिषेधः तत्सामान्यच्छलम्। अहो खल्वयं ब्राह्मणो विद्याचरणसंपन्न इति हि स्तुत्यर्थं वाक्यमभ्यनुजानतोक्तं संभवति ब्राह्मणे विद्याचरणसंपदिति, तदेतदपि वाक्यं स्तुत्यर्थमेव, न त्वस्य ब्राह्मणत्वाद्धेतोर्विद्याचरणसंपद्विवक्षितेति। तत्र परो हेतुत्वमस्याविवक्षितमारोप्य वचनं विहन्तीति तदिदं सामान्यच्छलमिति। विषयानुवाद इति। संपद्विषयस्य ब्राह्मणत्वस्यानुवाद इत्यर्थः। कस्याविवक्षितहेतुकस्य पुंसः। तदेतद्वार्तिककारो व्याचष्टे। सामान्यस्येति। विवक्षितार्थमतिगतं सामान्यमित्यर्थः॥१३॥

धर्म-लम् (सू. १४)॥ शब्दस्य धर्मः प्रयोगः, तस्य विकल्पो द्वैविध्यम्। तस्य च द्विविधः प्रयोगः प्रधानो भाक्तश्च। तत्रापि प्रधान औत्सर्गिकः, तस्य तु क्वचिदपवादाद् भाक्तो भवति। तदेतदाह भाष्यकारः, अभिधानस्य यथार्थे

प्रयोगो धर्मः औत्सर्गिकः। तत्किमयमेव नेत्याह। विकल्पो द्वैविध्यम्। कोऽसौ द्वितीय इत्यत आह। उत्सर्गस्य क्वचिदपवादादन्यत्र दृष्टस्यान्यत्र प्रयोगः। तदेवं व्यवस्थिते धर्मविकल्पेन निर्देशे वाक्ये, निर्दिश्यतेऽनेनेति व्युत्पत्त्या, तत्र भाक्तविवक्षायां मञ्चाः क्रोशन्तीति अत्रार्थसद्भावेन प्रतिषेधः। तमेवार्थसद्भावमाह। मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्तीति। वार्तिकमते त्वर्थसद्भावस्यैव प्रतिषेध इति व्याख्येयम्। ननु यद्यन्यत्र दृष्टस्यान्यत्र प्रयोगः हन्त सर्वं सर्वत्र प्रयुज्येतेत्यत आह। उपचारो नीतार्थः। प्रापितार्थः। सहचरणादिना निमित्तेनेति। अन्यत्र दृष्टस्याप्यन्यत्र प्रयोगः संबन्धादेव भवतीति नातिप्रसङ्ग इत्यर्थः। न च्छन्दतः न छद्मनेत्यर्थः। ननु यदि भाक्ततयाऽप्युपपत्तिर्न्न किञ्चिज्जल्पाकभाषितं दुष्टं स्यात्, सर्वस्यैव यथाकथञ्चिद्भाक्तत्वेनोपपत्तेरित्यत आह। प्रधानभूतस्येति। भाक्तस्येत्येतावति वक्तव्ये प्रधानग्रहणं सिद्धतया दृष्टान्तलाभाय लोकसिद्ध एवोपचारः कर्त्तव्यो नापूर्वो विना प्रयोजनम्। लोकसिद्धश्चायमुपचारो मञ्चाः क्रोशन्तीत्यर्थः। सूत्रव्याख्यानपरं वार्तिकं धर्मविकल्पनिर्देशशब्देन सूत्रस्थेनाभिधानं प्रयोगः शब्दस्य धर्मो भवन् द्विधाभिधीयते। द्वैविध्यमाह। प्रधानमिति। सोऽयमभिधानाभिधेयव्यवहार इति। अभिधानं शब्दो ऽभिधेयो गम्यः, स च क्वचिद्वाच्यः क्वचिद्भाक्त इति। सुबोधम्॥ १४॥

परीक्षापर्वणः सन्निधानात्तदर्थं लक्षणपर्वण्यपि योग्यायै ? सूत्रकारः छललक्षणं परीक्षते।

वाक्छ-न् ( सू. १५ )॥ स्थान्यर्थो गुणशब्दो यो वस्तुतः स एव प्रधानशब्दः स्थानार्थ इति कल्पयित्वेति

योजना । यथा वाक्छले नवीनार्थो नवशब्दः सङ्ख्याभेदे कल्पितस्तथेहापीति पूर्वपक्षः ॥१५॥

सिद्धान्तसूत्रम् ।

न त-त् (सू. १६) ॥ तस्योपचारच्छलेऽर्थसद्भावप्रतिषेधस्यार्थान्तरकल्पनातः वाक्छलादित्यर्थः ।

सूत्रतात्पर्यमाह वार्तिककारः । अविशेषादित्यस्येति । ( १७८ । ७ ) विधेयं वस्तु । मञ्चाः क्रोशन्तीत्यत्र क्रोशनं विधीयते । मञ्चा इति त्वनूद्यते । अत एव गुणे त्वन्याय्यकल्पनेति मञ्चा इत्येतदप्रधानमनूद्यतया भाक्तं न तु क्रोशन्तीति, न विधौ परः शब्दार्थ इति न्यायात् । तदिह विधीयमानं क्रोशनमेव वस्तु प्रतिषिध्यते नैव मञ्चाः क्रोशन्तीति च्छलवाक्येन । नवकम्बलो देवदत्त इति वाक्ये तु देवदत्तमनूद्य नवत्वविशिष्टः कम्बलो विधीयते । तत्र न विधेयस्य वस्तुनः कम्बलस्य सद्भावः प्रतिषिध्यते । किं तु तदेकदेशस्यानेकताया इति महान् भेद इति सिद्धान्तः ॥ १६ ॥

अवि-ङ्गः ( सू. १७ ) ॥ किंचित्साधर्म्यात्रित्वाभावे द्वित्वस्याप्यभ्युपगतस्याभावप्रसङ्गः । ओमिति ब्रुवतो वस्तुत्वेन समस्तभेदोच्छेदप्रसङ्गः । भाष्यवार्त्तिके अतिरोहितार्थे ॥ १७ ॥

उद्देशक्रमानुरोधेन जातिलक्षणक्रममाह भाष्यकारः । अतः छललक्षणादूर्ध्वम् ।

साध-तिः ( सू. १८ ) ॥ प्रतीपमवस्थानं प्रत्यवस्थानं तथा सति छलस्य सम्यग्दूषणस्य च जातित्वप्रसङ्गोऽत उक्तं साधर्म्यवैधर्म्याभ्यामिति । न च च्छले साधर्म्यवैधर्म्ये स्तः, न च सम्यग्दूषणं साधर्म्यवैधर्म्यमात्रादपि तु प्रयो(गा)जकादिति । प्रयुक्ते हेतौ तदाभासे वा यः प्रसङ्गो जायते सा जातिरिति । जल्पे

हि वेदप्रामाण्यं विद्वांसं प्रति कुहेतुना यदा नास्तिकैरधिक्षिप्यते सदुत्तरं चास्य यदा सहसा न प्रतिभाति तदेश्वराणां माभूद्वेदाप्रामाण्यबुद्धिरिति जात्याऽपि प्रत्यवस्थेयम् । अन्यथेश्वरचरितानुवर्त्तिनीनां प्रजानां विप्लवो भवेदिति । क्वचित्पुनरबुद्धिपूर्वमेव हेतौ हेत्वाभासे वा जातिप्रयोगः सम्भवति । जायमानोऽर्थं इति जातिपदव्युत्पत्तिनिमित्तं दर्शितम् ।

तदेतद्वार्त्तिककारो व्याचष्टे । साधर्म्येणेति ( १७९ । ३ ) यथा पक्षे सति प्रतिपक्ष एवं स्थापनायां सत्यां प्रत्यवस्थानमिति । सूत्रार्थस्तु यथाश्रुति न पुनरुदाहरणसाधर्म्येण यथाभाष्यं बोद्धव्यः । यद्येवं, भाष्यं तर्हि कथमित्यत आह । उदाहरणार्थमिति । एवं वैधर्म्येण वेत्यतदपि यथाश्रुति, न पुनर्यथाभाष्यमुदाहरणार्थं तद्दित्यर्थः । अस्य व्याख्यानस्य गुणाभिधानेन प्रश्नपूर्वकं प्रपञ्चमाह । किमर्थमिदमिति ॥ १८ ॥

विप्र–नम ( सू. १९ ) ॥ सूक्ष्मविषया प्रतिपत्तिर्विपरीता । स्थूलविषया च कुत्सिता । कथमसौ निग्रहस्थानमित्यत आह । विप्रतिपद्यमान इति । अप्रतिपत्तिमाह । आरम्भविषय इति । लाघवाय विप्रतिपत्त्यप्रतिपत्ती इति वक्तव्ये कस्मादसमासकरणमित्यत आह । असमासाच्चेति । विप्रतिपत्त्यप्रतिपत्तिभ्यामन्यदपि हेतूदाहरणाधिकं नाम जल्पे निग्रहस्थानमस्ति, तदपि ग्रन्थाधिक्येनावरुध्यत इत्यर्थः ।

आरम्भविषये अनारम्भ इत्यादि भाष्यं, तद्व्याचष्टे । स्वपरार्थोत्तराऽसंवित्तिरिति । द्वेधा खल्वारम्भविषयेऽनारम्भो भवति । दूष्यं वा परोक्तं साधनं प्रतिषेधहेतुं वा न प्रतिपद्यते । सेयं स्वपरार्थोत्तराऽसंप्रतिप-

त्तिः उत्तरग्रहणं साधनमप्युपलक्षयति, स्वार्थोत्तराऽप्रतिपत्तिस्तु साधनप्रतिषेधहेतू परकीयौ प्रतिपद्य तत् प्रतिषेद्धुं स्वकीयमुत्तरं न प्रतिपद्यते इत्यर्थः। चोदयति, स्वयं प्रयुक्ते वस्तुतः समर्थे साधने कथम् अप्रतिपत्तिर्विप्रतिपत्तिर्वेति द्रष्टव्यम्। परिहरति। तदाऽपीति। समर्थसाधनज्ञानं साधनप्रतिपत्तिर्न साधनमात्रज्ञानमित्यर्थः॥ १९॥

सूत्रान्तरमवतारयितुं भाष्यकार आह। किं पुनरिति। यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेदस्तथाऽपि लक्षणाभेदाभिप्रायेणाभेद उक्तः।

तद्वि-त्वम् ( सू. २० )॥ नानाकल्प इति स्वरूपतः। विविध इति प्रकारतः। यथालक्षणमिति यथास्वरूपमित्यर्थः।

अध्यायार्थं संक्षिप्याह वार्त्तिककारः। तन्त्रप्रतिज्ञेति। तन्त्रस्य शास्त्रस्य प्रतिज्ञा प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति सूत्रं, शास्त्रमेव हि तत्त्वज्ञानमिति। संसारो दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामिति। तन्निवृत्तिश्च संविदा उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति। तस्माद्यः प्रमाणादिसूत्रेणोद्देशः तत्परिकरो द्वितीयं सूत्रं, द्वाभ्यामुद्देशः, शेषं सुबोधमिति॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां प्रथमस्याध्यायस्य द्वितीयमाह्निकम्।
समाप्तश्चायं प्रथमो ऽध्यायः॥

१ अ० १ आ० ४१ सूत्राणि। २ आ० २० सूत्राणि मिलित्वा ६१ सूत्राणि १ आ० प्रकरणानि। २ आ० ४ प्रकरणानि मिलित्वा ११ प्रकरणानि।

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़्पुस्तकमालायाः

२४

न्यायविभागे (३) तृतीयपुष्पम् ।

षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचित-

# न्यायवार्तिकतात्पर्यटीकायाः

द्वितीयतृतीयचतुर्थपञ्चमाध्यायाः—द्वितीयो भागः ।

काशीस्थश्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयाध्यापकेन

न्यायाचार्यपं०श्रीराजेश्वरशास्त्रिद्राविडेन संशोधितः ।

काश्यां—

चौखम्बासंस्कृतग्रन्थमालाप्रकाशक-श्रीयुतहरिदासगुप्तात्मज-

श्रेष्ठिजयकृष्णदासगुप्तमहाशयेन स्वकीये 'विद्याविलास'

नाम्नि यन्त्रालये मुद्रयित्वा प्रकाशिता ।

१९८३

KASHI-SANSKRIT-SERIES
( HARIDAS SANSKRIT GRANTHAMALA )
24
Nyāya Section No. 3

# NYĀYAVĀRTIK-TĀTPARYA ṬĪKA

BY

ŚRĪ VĀCHASPATI MIŚRA.

*Vol. II Containing 2nd, 3rd, 4th & 5th Adhyayas.*

EDITED BY
Nyāyāchārya
Pandit Śrī Rājeśwar Śāstri Drāvid.
Professor,
SRI VALLABHRAM SALIGRAM SANGA-
VEDA VIDYALAYA, BENARES.

Printed-Published and sold by
JAI KRISHNA DAS-HARI DAS GUPTA,
THE CHOWKHAMBA SANSKRIT SERIES OFFICE.
Vidya Vilas Press,
North of Gopal Mandir, Benares City.

1926.

Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

न्यायवार्त्तिकतात्पर्यटीकायां

# द्वितीयोऽध्यायः।

—————:०:—————

अत ऊर्ध्वं प्रमाणादिपरीक्षेत्यादिभाष्यनिराकरणीयामाशङ्कामाह वार्तिककारः. त्रिविधा चास्येति। ( १८ १। ४ ) स्थानवतां क्रमवतां परीक्षावचनमिति प्रमाणमेव परीक्ष्यत इति युक्तमिति। किमत्रादौ प्रमाणं न परीक्षितं, किं तु संशय एव परीक्ष्यत इत्याह। तानि विलङ्घ्येति। सोऽयं क्रमभेदः कुत इति भाष्यार्थमाह। परीक्षाङ्गत्वादिति। उद्देशक्रमानुरोधेन हि प्रमाणं पूर्वं लक्षितं, न तु लक्षणे संशयस्यास्ति कश्चिदुपयोगः। परीक्षा तु सर्वा विमर्षकरणिकेति परीक्षापर्वाणि सर्वथाऽऽर्थक्रमेण संशयस्य पूर्वभावः। यथाऽग्निहोत्रं जुहोति यवागूं पचतीत्यत्राग्निहोत्रात्प्राग्भावो यवागूपाकस्य, तस्याग्निहोत्रसाधनत्वात्। संशयलक्षणं चात्र परीक्ष्यते न संशय इति नानवस्थाऽपि। देशयति। ननु चोक्तमिति। शास्त्रगता त्वियं परीक्षा, सा च न विमर्शपूर्वेत्यार्थक्रमाभावान्नोद्देशक्रमो बाधनीय इत्यर्थः। परिहरति सत्यं न निर्णये नियम इति। न निर्णयः सर्वः संशयपूर्वः, विचारः सर्व एव संशयपूर्वः, शास्त्रवादयोश्चास्ति विचार इति तेनापि संशयपूर्वेण भवितव्यम्। शिष्ययोश्च वादिप्रतिवादिनोः शास्त्रे विमर्शाभावो न शिष्यमाणयोः, तस्मादस्ति शास्त्रेऽपि विमर्शपूर्वो विचार इति सिद्धम्। संशीतिरिति संशयस्य निरुक्तम्। ( १८ २। २ ) नावधारयतीत्यर्थः। ननु यथा लक्षणार्थः पूर्वनिरूपितस्तथा निर्बीजः

पूर्वपक्ष इत्यत आह। तस्य यथाश्रुतीति। परीक्षासाध्यो ह्यर्थस्तत्र व्याख्यानेन लक्षणपदेभ्यः साक्षादेव गम्यत इत्यर्थः। समानमनयोरिति साक्षात्कारं दर्शयति। न हि साक्षात् स्थाणुपुरुषावुपलभमानः समानं चानयोर्धर्मं कश्चित्सन्दिग्ध इत्यर्थः। व्यवच्छेदात्मकत्वादिति। न निश्चयोऽनिश्चयस्य जनकः, कारणानुरूपत्वात्कार्यस्येत्यर्थः। न समानधर्माध्यवसायादेवेति संशयलक्षणोक्तकारणमात्रोपलक्षणपरम्। एकवृत्तित्वाच्चेति। न हि यावेवारोहपरिणाहौ स्थाणोस्तावेव पुरुषस्येत्यर्थः॥ १॥ २॥

विप्रतिपत्तौ च सम्प्रतिपत्तेरिति न स्वरूपविरोधाद्विप्रतिपत्तिरस्तीत्यर्थः। ॥ ३॥ ४॥

तथाऽत्यन्तसंशय इति तत्पदान्तरेण समानधर्मोपपत्त्यादेर्विशेषणमपश्यतः पूर्वपक्षः॥ ५॥

सिद्धान्तमाह अस्योत्तरमिति। (१८३। १३)

यथो-वा (सू० ६)॥ यदि निर्विशेषणं समानधर्मोपपत्त्यादि संशयकारणमुच्येत ततः पश्चादकरणात्पूर्वमपि न कुर्यादित्यसंशयः पूर्वं वा करणात्पश्चादपि कुर्यादित्यत्यन्तसंशयः, न त्वसौ निर्विशेषणः संशयकारणमिति नासंशयो नात्यन्तसंशय इत्यर्थः। एतेनेति समानपदप्रयोगेण। सदृशार्थो हि समानशब्द इति पूर्वं व्याख्यातम्। यदप्येतत् सारूप्याभावाद (१८४।७)ध्यवसायसंशययोः कार्यकारणयोरिति। विशेषानवधारणमुभयोः समानमित्यर्थः। भाष्यकारेण तु यत्सारूप्यमुक्तं तत्तथा न बोद्धव्यम्। यदि हि कार्यकारणयोरुत्पत्तिः सारूप्यं तदतिव्यापकं चाव्यापकं च। नित्यानामपि कारणत्वात्। तस्मात्सारूप्यशब्दो न सारूप्यस्य निर्देशः। अपि तु

कार्यकारणधर्मान्वयव्यतिरेकपर इत्याह । कारणसद्भावादिति । अनवधारणेनैव तत्त्वानुपलब्धेरिति प्रत्युक्तम् । सत्प्रतिपक्षयोरपि मिलितयोरन्यत्रादर्शनेनासाधारणएवान्तर्भावात्, एकैकविवक्षया तु हेत्वाभासान्तरत्वमिति भावः । न चाव्यवस्थातः संशय इति । ( १८५ । २ ) नासौ पृथक्कारणमपि तु समानधर्मोपपत्त्यादिपरिकरतयेत्यर्थः । यत्पुनरेतद्विप्रतिपत्ताविति । विषयापेक्षया विप्रतिपत्तिः स्वरूपापेक्षया सम्प्रतिपत्तिरिति । एवमव्यवस्थायामपि द्रष्टव्यम् ॥ ६ ॥

कोऽस्य सूत्रस्येति तात्पर्यप्रश्नः । उत्तरं स्वयमिति । संशयपूर्वकत्वात्सर्वपरीक्षाणां परिचिक्षिषमाणेन संशयाक्षेपहेतुभिर्न प्रतिषेद्धव्योऽपि तु परैरेवमाक्षिप्तः संशय उक्तैः समाधानहेतुभिः समाधेयः । यथोद्दिष्टेति भाष्ये यदप्युक्तमित्यर्थः। शास्त्रकथायां वादलक्षणायामित्यर्थः ॥ ७ ॥

अथ प्रमाणपरीक्षेत्यादिभाष्यम् । आर्थेन हि क्रमेण संशयपरीक्षायामुक्तेनोद्देशक्रमो बाधितः, प्रमाणादिषु तु तद्बाधकारणाभावाद् उद्देशक्रमानुरोधेन प्रमेयादिभ्यः प्राक् प्रमाणान्येव परीक्षितानि, तत्रापि प्रथमं प्रमाणसामान्यलक्षणपरीक्षा, तत्पूर्वकत्वाद्विशेषलक्षणानाम् । तत्र सामान्यलक्षणमुपलब्धिसाधनं प्रमाणमिति, तच्चोपलब्धिसाधनत्वं प्रत्यक्षादीनामेवेति प्रत्यक्षादीनामित्युक्तम् ।

तदेतदाह वार्तिककारः । अथेदानीमिति । ( १८६ । १ ) परीक्षणीयं पृच्छति । किं पुनरेषामिति । सर्वैरेव वादिभिः स्वसिद्धान्तव्यवस्थापनाय प्रमाणान्यभ्युपगन्तव्यानि, तदभावे तद्व्यवस्थानुपपत्तेः । यस्य तु स्वपक्ष एव नास्ति, नासौ लौकिको न परीक्षक इत्युन्मत्तवदुपेक्षणीयः ।

तस्मात्सर्वप्रमाणभृतिसिद्धेर्न प्रमाणसामान्यं परीक्षणीयमिति भावः। उत्तरम्, आदौ तावत्संभव इति । न परीक्षा संशयमन्तरेणेति संशयबीजमाह । सदसतोरिति । पूर्वपक्षमाह। व्युदस्य संशयमिति । अयमत्र पूर्वपक्षिणो माध्यमिकस्याभिसन्धिः । यद्यपि मम विश्वविचारासहत्ववादिनः प्रमाणं नाम न किञ्चिदस्ति विचारसहं, तथाऽपि लोकसिद्धान्येव प्रमाणानि तैरेव प्रमाणैः पर्यालोच्यमानानि विचारं न सहन्ते, सोऽयं प्रमाणानामपराधो यानि स्वविरोधेन विलीयन्ते न ममापराध इति । ज्ञानं हि प्रमाणं तद्योगात्प्रमेयमिति चार्थ इति च भवति । तद्यदि प्रमाणं पूर्वं प्रमेयादर्थादुत्पद्यते ततः प्रमाणात्पूर्वं नासावर्थ इति इन्द्रियार्थेत्यादिसूत्रव्याघातः ॥ ८ ॥ ९ ॥

अथ पूर्वं प्रमेयं पश्चात्प्रमाणं तत्राह । पश्चादिति । यद्यपि स्वरूपं न प्रमाणाधीनं, तथापि तस्य प्रमेयत्वं तदधीनं, तदपि चेत्प्रमाणात्पूर्वं न प्रमाणयोगनिबन्धनं स्यादित्यर्थः । तदिदमुक्तं प्रमेयसंज्ञेति ॥ १० ॥

यौगपद्ये दृष्टव्याघातः, सूत्रव्याघातश्च । प्रयोगस्तु-प्रत्यक्षादयो न प्रमाणत्वेन व्यवहर्त्तव्याः कालत्रयेऽप्यर्थाप्रतिपादकत्वात् । यदेवं न तत्प्रमाणत्वेन व्यवह्रियते, यथा शशविषाणं, तथा चैतत्तस्मात्तथेति ।

एवं पूर्वपक्षिते सिद्धान्तमाह । अत्र समाधिरिति । उपलब्धिहेतोरित्यादिभाष्यस्य कालत्रयेऽप्यर्थाप्रतिपादकत्वादिति हेतोरसिद्धतोद्भावनमर्थः ।

स्वयं वार्त्तिककारोऽस्यानुमानस्य दूषणमाह । प्रत्यक्षादीनामप्रामाण्यमिति चेति । (१८७।२) लब्धात्मकं खल्वनुमानं प्रत्यक्षादीनां प्रमाणानामप्रामाण्यमापादयेत्, न त्वलब्धात्मकं,

तस्य तु प्रतिज्ञाविरोधेनात्मलाभ एव नास्तीति कथं तेषामप्रामाण्यमापादयितुमर्हतीति भावः । यदि प्रमाणानि नार्थं साधयन्ति, प्रत्यक्षादीनीत्येव न स्यात् । न खलु तानि प्रमाणतोऽसिद्धानि प्रत्यक्षादीनीत्येव भवन्तीत्यर्थः । न चैतेषामर्थसाधनत्वं सामान्यविशेषाभिधायिप्रत्यक्षादिपदगोचरताऽपीत्याह । कथं चान्यथेति । अपि च प्रामाण्यनिषेधे न प्रमाणानां प्रत्यक्षादीनामसत्त्वम् । न ह्यकमण्डलुर्माणवक इत्यनेन माणवकः प्रतिषिध्यते, किं तर्हि ? तस्य कमण्डलुयोगो धर्मः, ततश्च प्रमाणानामसत्त्वं पूर्वपक्षिणोऽभिमतं न स्यादित्याह । धर्मप्रतिषेधाच्चेति । शङ्कते । अथ भावस्यास्वतन्त्रत्वादिति । निराकरोति । एवमपीति । प्रतिषिध्यमान ( १८८।३ ) इति पाठे वक्तव्ये विधीयमान इति दृष्टान्तार्थम् । एतेन तद्धितार्थ इति । प्रामाण्यपदार्थ इत्यर्थः । यथाश्रुतश्च हेतुर्व्यधिकरण इत्याह । यश्चायं हेतुरिति ।

यत्पुनरित्यादि भाष्यं व्याचष्टे । यत्पुनरेतत्प्रमाणेनेति ।

संभवः प्रत्यक्षादीनां निवर्त्यत इति । प्रत्यक्षादीनामभावे कारकहेतुवचनमित्यर्थः । असम्भवं प्रत्यक्षादीनां सिद्धमेव ज्ञापयतीत्याह । अथासम्भवो ज्ञाप्यते । न ह्यसतो निवृत्तिरिति ( १८९।३ ) नासन् घटो मुद्गरप्रहारेण निवर्त्यत इत्यर्थः ॥ ११ ॥

देशयति । त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिरित्येवमभिधानेनेति । परिहरति । नैष दोष इति । त्वद्वचनं त्वदभ्युपगमविरुद्धमस्माकं तु नैतद्वचनं नाभ्युपगमविरुद्धमित्यर्थः । न च धर्मिणां प्रतिषेधे कश्चिन्न्याय इति । ( १९०।१ ) नानुमानं धर्मिप्रतिषेधे प्रभवति, आश्रयासिद्धत्वाद्धेतोरित्यर्थः ।

अपि च प्रमाणमात्रमधिक्षिपतः प्रत्यक्षादीनामप्रामाण्यमिति प्रत्यक्षादीनां प्रामाण्यमिति च वाक्ययोरर्थभेदाभेदौ विचारं न सहेते इत्याह । प्रत्यक्षादीनामप्रामाण्यमिति । एवमेव वक्तव्यमिति । नञोरप्रयोगेण लाघवात् । सो ऽसाधर्म्यं वेति । यदा सत्येव घटे तस्यासामर्थ्यं विवक्षित्वोच्यते नास्ति घट इति नोदकाहरणसमर्थ इति तदा गम्यते । तन्त्रान्तराभ्युपगतानां प्रतिषेध इति । तन्त्रान्तरे यादृशं प्रमाणमभ्युपेयते तादृशस्याभ्युपगमो भवति । यथा प्रधानं नास्तीति जगत्कारणस्य सुखदुःखमोहात्मकत्वं प्रधानत्वं तत्प्रतिषिध्यते, न पुनर्जगत्कारणं, तस्यान्यादृशस्याभ्युपगमादिति । कथमिति प्रमाणाक्षेपः । कस्येति प्रतिपाद्याक्षेपः । कश्चेति प्रतिपादकाक्षेपः । प्रतिपाद्याक्षेपं विभजते । अप्रतिपन्न इति । प्रतिपादकाक्षेपं विभजते । प्रतिपन्नश्चेति । क ( १९१ । १ ) प्रतिपाद्ये । किं प्रतिपाद्यत इति । यद्युपादीयते उदाहरणं तत्प्रमाणेनानवधारितं न शक्यमुपादातुमिति भावः ॥ १२ ॥

न केवलमशक्यं व्यर्थं चेत्याह । प्रत्यक्षादीनां चेति । सर्वैः प्रमाणैरिति । उदाहरणादिविषयैः प्रमाणैर्विप्रतिषिद्धो विरुद्धो भवति, बाधितविषयतया प्रमाणाभासो भवतीत्यर्थः । विरुद्धं चेत्याह । सिद्धान्तमभ्युपेत्येति । प्रमाणानामित्यत्रयवाभिप्रायम् । अवर्जयन्निति वर्जनाविरुद्धमुपादानमुच्यते, उपाददान इत्यर्थः ॥ १३ ॥

तत्प्रामाण्ये वेति । अस्यार्थः । यदि माध्यमिको ब्रूयात् प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरिति स्ववाक्यावयवाश्रितानि प्रमाणानि यथालोकप्रतीतिसिद्धानि, तैरविचारितसिद्धैरितरेषां प्रामाण्यं प्रतिषिध्यत इति । तत्रेदमुच्य-

ते । तत्प्रामाण्ये वा अवयवाश्रितप्रत्यक्षादिप्रामाण्ये न सर्वप्रमाणविप्रतिषेधोऽवयवाश्रितानामेव प्रामाण्याभ्युपगमात् । किं पुनरिदमविचारितसिद्धत्वं, किं विचारासहत्वम्, आहो सर्वजनसिद्धतया सन्देहानास्पदत्वम । तत्र पूर्वस्मिन्कल्पे विचारासहत्वेन स्वयं दुस्थितेनान्येषां प्रामाण्यं बाध्यत इति सुभाषितम् । तस्मादुत्तरः कल्पः, तथा च न सर्वप्रामाण्यं तस्यैव प्रामाण्यात् ।

अत्र भाष्यं, वीत्ययमुपसर्गः सम्प्रतिपत्त्यर्थे प्रतिषेधशब्दार्थमनुजानाति विशेषमभिदधातु न तु तद्व्यतिरिक्तार्थो न व्याघातवचन इत्यर्थः । तदिदमुक्तं न व्याघाते । कस्मादर्थाभावात् । स्ववाक्यावयवाश्रितानां हि प्रमाणानां प्रामाण्ये सर्वप्रमाणप्रतिषेधव्याघातः पूर्वमुक्तस्तत्प्रतिषेधः पूर्वेण विरुध्यते । अशक्यश्चेति अर्थाभाव इत्यर्थः ।

तदेतद्वार्त्तिककारो व्याचष्टे । वीत्ययमुपसर्गो विशेषप्रतिषेधे । ( १९२ । १ ) यावदुक्तं भवति विशेषेण सर्वेषु प्रमाणेषु प्रतिषेध इति, तावदुक्तं भवति विप्रतिषेध इति, प्रतिषेधशब्दार्थाभ्यनुज्ञानत्वाद्विशब्दस्य । तेन न सर्वप्रमाणाविप्रतिषेध इत्यनेन विपदसहितेन किमुक्तं भवति । इदमुक्तं भवति कानिचिदिति । अवयवाश्रितानि प्रमाणानि विचार्य समुदायं विचारयति । यच्चेति ॥ १४ ॥

तदिदं सूत्रकारेण त्रैकाल्यासिद्धेरित्यनुयोगस्यप्रतिषेधेऽपि साम्यादप्रमाणविरोधश्चापादितः, सम्प्रत्यसिद्धतोद्भावनपरं सूत्रं पठति ।

त्रैका-द्धेः [सू. १५] । तत्पाठमाक्षिपति । किमर्थमिति । स्वातन्त्र्येण चेदस्य सूत्रस्यार्थः पूर्वमुक्तः, कृतं सूत्रपाठे-

नेत्यर्थः । परिहरति । पूर्वोक्तेति । न तदस्माभिरुत्सूत्रमुक्तमपि तु सूत्रार्थ एवेति ज्ञापनार्थं सूत्रपाठोऽस्माकमित्यर्थः । नियमेन यः प्रतिषेधः पूर्वमेव वा पश्चादेव वा सहैव वेति तं प्रतिषेधति । अनियमेति । खलुशब्दोऽयं यस्मादर्थे । यस्मादनियमदर्शीऋषिः ।

वार्तिकं तदुत्थानज्ञापनार्थः सूत्रपाठ इति दर्शयति । पाठक्रममतिलङ्घ्य कस्मात्तत्रैवेदमिति । अत्रैव तद्भाष्यं कस्मान्नोक्तमिति च द्रष्टव्यम् । परिहरति । अविशेषादिति । अथ शब्दः श्रोत्रविवरे समवेतः कथमातोद्यमसंबद्धं गमयतीत्यत आह । योऽसौ वीणावेणुशब्दयोरिति । अयं शब्दो धर्मी वीणाङ्गुलिसंयोगजशब्दपूर्व इति साध्यो धर्मः, तन्निमित्तासाधारणधर्मवत्त्वात्, पूर्वोपलब्धवीणानिमित्तध्वनिवदिति । तदिदमुक्तं वीणानिमित्तकत्वमिति । धूमदर्शनादिति । संयोगिना हि वह्निना विशिष्टो धूमोऽनुमीयते न कारणेन, अस्तीति वर्त्तमानावभासानुपपत्तेरिति ॥ १५ ॥

यत्पुनराक्षिप्यते यदनियतं न तत्परमार्थसत्–यथा रज्ज्वामारोपितं सर्पत्वं, तामेव हि रज्जुं तदैव कश्चित्सर्प इति कल्पयति कश्चिद्धारेति । स एव कदाचित्सर्प इति कल्पयित्वा पश्चाद्धारेति कल्पयति, तथा च प्रमाणप्रमेयभावस्तस्मान्न परमार्थसन्निति । अत्रेदमुत्तरसूत्रम् ।

प्रमेया च तुला प्रामाण्यवदिति (सू० १६) । तद्योजनिकां करोति । प्रमाणं प्रमेयमिति चेयमिति । अयमभिसन्धिः । क्षणभङ्गपरिणामनिरासे सति स्वकारणादुत्पन्नं स्थिरं वस्तु तत्तद्वस्त्वन्तरसान्निधानात्तत्तद्धर्मयोगे सति तत्तद्बु-

द्विव्यपदेशमनुभवति । समावेशं दर्शयितुं पृच्छति । यदा पुनरिति । ( १९३ । ३ ) उत्तरम्, तदा निमित्तेति । अस्य चार्थस्य ज्ञापनार्थं सूत्रं प्रमेया च तुलाप्रामाण्यवदिति । न केवलं प्रमाणं समाहारगुरुत्वे तुला, यदा पुनरस्याः सन्देहो भवति प्रामाण्यं प्रति तदा सिद्धप्रमाणभावेन तुलान्तरेण यत्परीक्षितं सुवर्णादि तेन प्रमेया च तुला, प्रामाण्यवत् । यथा प्रामाण्ये तुला प्रमेया च तथाऽन्यदपि सर्वं प्रमाणं प्रामाण्ये प्रमेयमित्यर्थः ।

तदेतद्भाष्यकृदाह, एवमनवयवेन कार्त्स्न्येन । तन्त्रार्थः शास्त्रार्थ इति । क्वचित्प्रमातृत्वप्रमेयत्वप्रमाणत्वादीनां समावेशो यथाऽऽत्मनि । स हि प्रमाता प्रमीयमाणश्च प्रमेयं, तेन तु प्रमितेन तद्गतगुणान्तरानुमाने प्रमाणम् । क्वचित्पुनः प्रमाणत्वप्रमेयत्वफलत्वानां समावेशो यथा बुद्धौ, क्वचित्पुनः प्रमाणत्वप्रमेयत्वयोः,—यथा संशयादौ । सेयं समावेशस्य तन्त्रार्थव्याप्तिरिति । तथा च कारकशब्दा इति ।

अत्र पूरयित्वा व्याचष्टे वार्तिककारः यथा च प्रमाणेति । यावन्ति यत्र निमित्तानि तावतां तत्र नैमित्तिकानां प्रवृत्तेरवश्यंभावो नियमः ।

स्वस्थितौ वृक्षः स्वातन्त्र्यात्कर्तेति भाष्यम् । तत्र स्वातन्त्र्यं पृच्छति वार्त्तिककारः, किं पुनः स्वातन्त्र्यमिति । इतरकारकाप्रयोज्यत्वं, ( सः प्रयोजको ऽयं न कारकान्तराणां ) प्रयोजकत्वं च कारकान्तराणां कर्तुः स्वातन्त्र्यमुक्तम् । इह तु कारकान्तराणामभावात्तादृशं स्वातन्त्र्यं नास्तीति भावः । उत्तरं कारकान्तरानपेक्षत्वं, कारकान्तरापेक्षस्य हि प्रयोजकतया कथञ्चित्स्वातन्त्र्यं

विवक्ष्यते तदनपेक्षस्य नितरां स्वातन्त्र्यमित्यर्थः। यदाऽयं स्थितिशब्दो गतिप्रतिषेधवचन इति। यावदुक्तं भवति न गच्छतीति, तावदुक्तं भवति तिष्ठतीति। अत्र च निषेधस्य निषेध्याधीननिरूपणतया तदुपाधिः पूर्वापरीभावो न तु स्वरूपेण निषेधस्य पूर्वापरीभावसम्भव इति। यदाऽयमस्तेरभिधायक इति। सत्तासामान्याभिधायक इत्यर्थः। अस्ति व्यनक्तीति। वृक्षस्य हि महत्त्वे सति रूपवत्त्वे सति सत्तासमवाय एव सत्ता-व्यञ्जकत्वम्, तत्र चानपेक्ष इत्यर्थः। गेहसम्बन्धानुभवो (१९४।२) गेहसम्बन्धप्राप्तिः समवायः। तद्विषया क्रिया गतिविधारकः प्रयत्नस्तेन हि स तिष्ठति। घटो गृहेस्तीति त्वौपचारिकः प्रयोगः। यदाऽयमभग्नवचन इति। अत्रापि निषेध्यस्य पूर्वापरीभावोपाधिरेव निषेधस्य तथाभावः। अथ वा तिष्ठतीत्यत्रापि कया चिद्विवक्षया कारकान्तरापेक्षाऽस्तु, तथाऽपि तत्प्रयोजकत्वेनैव स्वातन्त्र्यमित्याह। समुदायेति। अवयवानां समूहः समुदायस्तदेकदेशोऽवयव इति। ध्रियत इति कर्त्तरि लकारः। प्रत्यभिज्ञानविषयता वा स्थितिः। तस्यां सत्यामपि कारकान्तरापेक्षायां प्रयोजकतया स्वातन्त्र्यमित्याह। पूर्वापरेति। अनेके पर्यायवन्तः प्रत्ययाः प्रागनु तत्ताश्रयस्य धर्मिणः पुनरनुभवः। अथ स्मृतिरथ प्रतिसन्धानमिति। वैनाशिको देशयति। चक्रेति। यदेव दण्डसंयोगेन चक्रभ्रमणं तदेवेदमुपरतेऽपि दण्डसंयोगे इत्यर्थः। परिहरति न प्रमाणेति। नासति बलवति बाधके प्रमाणे प्रत्यभिज्ञानस्य शक्यं मिथ्यात्वं, ज्वालादिषु तु तदस्तीत्यर्थः। न च समस्तप्रतिसन्धानप्रत्ययमिथ्यात्वे मिथ्याप्रतिसंधानप्रत्ययो भवितुमर्हति बीजा(भावा)दित्याह। मिथ्याप्रत्ययाश्चेति। वैनाशिकः पृच्छति। अथ भवत इति।

एवं ब्रुवाणः प्रत्यक्षमप्रमाणयन्न शक्यस्तेन बोधयितुमित्यनुमानं प्रमाणमाह । उक्तं प्रमाणमात्मलक्षणे । रूपेति ।(१९५।१) अनुमानान्तरमाह । कार्यस्येति । कार्यकालानुभवनं कार्यकालप्राप्तिः। वैनाशिकः शङ्कते। अनाधारमिति। प्रतीत्य पूर्वभावं विकृत्येत्यर्थः। दूषयति। तन्नेति। आधेयस्याधारसमानकालत्वमनुभवसिद्धं तेनाधारेण कारणेन कार्यकालं स्थातव्यम् । अनाधारत्वं तु कार्यस्य नानुभवगोचरः, अपि तु युक्त्या साध्यं, सा च दृष्टान्ताभावादनुपपन्ना । न च विप्रतिपत्तिमात्रादनुभवः शक्योऽपवदितुं, क्षणभङ्गसाधनानि च निराकरिष्यन्ते । यदि हि रूपादीनामाधारवत्त्वं निषिध्यते ततोऽस्याभ्युपगमविरोधो भवति, भूतानि पृथिव्यादीनि भौतिका रूपादय इति । अभ्युगमान्तरविरोधमाह । यच्चोक्तं भवद्भिरिति। न केवलं रूपादीनामाश्रितत्वं भवद्भिरभ्युपगतमुपपन्नं चेत्याह । अनाश्रितत्वाच्चेति । पृच्छति । कर्मणि कः कारकार्थः । (१९६ । ३) कारकशब्दार्थः । क्रियानिमित्तं हि कारकं यत्पुनः क्रियाया एव व्याप्यं न तत्क्रियानिमित्तमिति न कारकम् । अकारकं च कथं कर्म । कारकाधिकारित्वात् कर्मसंज्ञाया इति भावः । उत्तरं क्रियाविषयत्वमिति । अनात्मसमवेतक्रियाफलशालित्वं क्रियाविषयत्वं कर्मत्वं, देवदत्तसमवेतया हि क्रियया दर्शनलक्षणया वृक्षविषयोऽनुभवो जन्यते, इदमेव चानुभवस्यार्थविषयत्वं यदर्थाधीननिरूपणत्वमित्युक्तं प्रमाणलक्षण इति । तेन क्रियाविषयस्य क्रियातः प्राग्भावाद्युक्तं कारकत्वम् । एवं च विकार्यप्राप्ययोरुपपन्नः कर्मभावः निर्वर्त्यस्य तु पटादेर्यद्यपि क्रियायाः प्राग्भावो नास्ति, तथाऽपि तदवयवानां तन्तून प्राग्भावस्तेषां तादर्थ्येन पटत्वे उपचारात्पटं करोतीति युक्तः

प्रयोगः । तथा हि सहचरणादिसूत्रे वक्ष्यति कटार्थेषु वीरणेष्विति । एतेन कर्मलक्षणेनाहिं लङ्घयति, ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीत्यादयोऽपि सङ्गृहीता वेदितव्याः । नगरं गच्छति चैत्र इत्यत्र यथा प्राप्तिर्नगरसमवेता, एवं चैत्रसमवेताऽपीति चैत्रस्यापि क्रियाजनितफलशालिनो मा भूत्कर्मत्वमित्यत उक्तमनात्मसमवेतेति । आत्मविषयेऽपि च मानसप्रत्यक्षे यद्यप्यात्मनो न कर्मता, तथाऽपि ज्ञानक्रिया सकर्मिकैवात्मधर्मस्यात्मव्यतिरिक्तस्य कस्यचित्कर्मणोऽवभासनादिति सर्वमवदातम् । वृक्षः सम्प्रदानं भवतीति । पाणिनीयलक्षणानुरोधेन लौकिकप्रयोगानुरोधाच्च सम्प्रदानमिति नेयमन्वर्थसंज्ञेति भावः । गुरुत्वप्रतिबन्धे कारणमिति प्रकृतोदाहरणाभिप्रायम् । तथा च गुणादीनामप्याधेयत्वाधिगतेर्द्रव्यादिभिराधेयभावः सिद्धो भवति । तेन न द्रव्यस्वभावः कारकमिति यदुक्तं माध्यमिकेन तदस्माकमभिमतमेव, काल्पनिकं तु कारकं न मृष्यामह इत्यनेनाभिसन्धिना भाष्यकारेणोक्तम् ।

एवं च सतीति । न क्रियामात्रमिति(१) । नावान्तरक्रियामात्रम् । यत्प्रधानक्रियासाधनमवान्तरक्रियाविशेषयुक्तमिति ।

तदेतदनुभाष्य वार्तिककारो व्याचष्टे । एवं च सतीति । तदनेन कारकसामान्यमुक्तम् ।

विशेषलक्षणपरं भाष्यं यत् क्रियासाधनं स्वतन्त्रमिति, तद्व्याचष्टे यदा तु विशेष इति । ( ३९७ । २ ) स्यादेतत् । क्रियासाधनमित्येतावदेवास्तु, क्रियाविशेषयुक्तमिति वा कृतमुभयोपादानेनेत्यत आह । सर्वस्य च कारकस्येति ।

(१) भाष्यस्थमिदं प्रतीकम् ।

यद्यवान्तरक्रियामात्रमुच्यते ततस्तस्मिन् सर्वस्य कर्तृत्वात्कारकवैचित्र्यं न स्यात्, प्रधानक्रियामात्रोपादाने च तत्र सर्वेषामवान्तरव्यापारमन्तरेण वैचित्र्यायोगादत उभयोपादानं प्रयोजनवदिति ।

एवं लक्षणत इति भाष्यं व्याचष्टे । एवं च शास्त्रमिति । देशयति । यदीति । परिहरति । न शक्तेरिति । पुनर्देशयति । शक्तेरिति । परिहरति । नैष दोष इति । ननु बुद्ध्यादयोऽपि शक्तिव्यक्तिहेतवो न चैते क्रियारूपाः, किन्तु गुणरूपा इत्यत उक्तं क्रियेत्यनेनेति । सामर्थ्यं बलम् । दुर्बलो हि जानन्नप्युपायं न व्यापारयति, यथा पाणिना कुण्ठः कुठारं, तेन शक्तिक्रियासम्बन्धयोः कारकशब्दो मुख्यः, शक्तिमात्रे तु गौण इति । प्रकृते योजयति । कारकशब्दश्चायमिति । ( १९८ । ५ )

सम्प्रति प्रकारान्तरेण प्रमाणान्याक्षिप्य समाधीयन्ते । अस्ति भोः कारकशब्दानामिति । ( १९८ । ७ ) अत्रैते कल्पा उपप्लवन्ते । किं प्रत्यक्षादीनामुपलब्धिः ससाधना निःसाधना वा । यदाऽपि ससाधना तदाऽपि किमेभिरेव प्रत्यक्षादिभिराहो प्रमाणान्तरेण । यदाऽप्येभिस्तदाऽपि किं तयैव प्रत्यक्षव्यक्त्या । अथैका व्यक्तिर्व्यक्त्यन्तरेणेति । तत्र प्रमाणान्तराभ्युपगमे विभागसूत्रव्याघातः, अनवस्थापातश्च । तत्र प्रत्यक्षादिभिः प्रत्यक्षाद्यन्तराणां ग्रहणे अनवस्थापातः । तयैव व्यक्त्या तु ग्रहणे आत्मनि वृत्तिविरोधः । न हि तयैवासिधारया सैवासिधारा छिद्यते । तस्मादसाधना प्रमाणोपलब्धिः, एवं चेत् कृतं प्रमेयसाधनैः प्रमाणैः, प्रमाणवदसाधनैवास्तु प्रमेयोपलब्धिरिति पूर्वः पक्षः । नासाधना प्रमाणसिद्धिर्नापि

प्रत्यक्षादिव्यतिरिक्तप्रमाणाभ्युपगमो येन विभागसूत्रव्याघातः स्यात् । नापि च तथैव व्यक्त्या तस्या एव ग्रहणमुपेयते, येनात्मनि वृत्तिविरोधो भवेत् । अपि तु प्रत्यक्षादिजातीयेन प्रत्यक्षादिजातीयस्य ग्रहणमातिष्ठामहे । न चानवस्था अस्ति किंचित्प्रमाणं यत्स्वज्ञानेनान्यधीहेतुः, यथा धूमादिः । किंचित्पुनरज्ञातमेव बुद्धिसाधनं यथा चक्षुरादि, तत्र पूर्वं स्वज्ञाने चक्षुराद्यपेक्षं चक्षुरादि तु ज्ञानानपेक्षमेव ज्ञानसाधनमितिकाऽनवस्था, बुभुत्सया च तदपि शक्यज्ञानं सा च कदाचिदेवकचिदिति नानवस्था । न च प्रामाण्यं प्रमाणानामप्रतीतं न प्रवृत्त्यङ्गमिति तदर्थं प्रमाणान्तरपेक्षायामनवस्थेतिवाच्यम् । दृष्टार्थे संशयादपि प्रवृत्तौ सत्यां प्रवृत्तिसामर्थ्येन तस्य सुज्ञानत्वात्, अदृष्टार्थेषु प्रवृत्तिसामर्थ्यावधृतप्रामाण्यप्रमाणसाधर्म्येण तस्यशक्यज्ञानत्वादिति दर्शितं प्रथमे सूत्रे । तस्मात्प्रत्यक्षादिभिः प्रत्यक्षादीनामुपलब्धिर्नचानवस्थेति सिद्धान्तः ।

भाष्यं–भोइत्यामन्त्रणे । कुतः पुनरुपलब्धिहेतुत्वमत आह । संवेद्यानिचेति, चोहेतौ । उपलब्धिविषयत्वं कुत इत्यत आह । प्रत्यक्षं मे ज्ञानमिति ॥ १६ ॥ १७ ॥ १८ ॥

प्रदीपभावाभावयोर्दर्शनस्य तथाभावात् । ज्ञातृमनसोश्च दर्शनादिति ( २०० । १ ) भाष्यं, तद्व्याचष्टे वार्तिककारः । न चायमेकान्त इति । ज्ञाता ज्ञेय इति सकर्माभिप्रायं, न ह्यन्यस्य समवेता ज्ञानक्रिया येनात्मनः कर्मता स्यात् अपि तु ज्ञातृस्थैव, परसमवेतक्रियाफलशालि हि कर्मेत्युक्तं, तस्मात्सुखादीनामात्मधर्माणामत्र कर्मता, आत्मनस्तु प्रकाशमानता, तत्र विवक्षया ज्ञेयत्वाभिधानं, मनस्तु यद्यपि स्वज्ञानं प्रति करणं कर्म च, तथाऽपि न स्वात्मनि वृत्तिविरोधः । यदि

हि ज्ञातं करणं भवेत्तदाऽऽत्माश्रयदोषप्रसङ्गः। स्वसत्तया च ज्ञानं प्रति करणम्, अन्यच्चास्य ज्ञानमन्या सत्ता, न च तत्समवेता ज्ञानक्रिया, किं त्वात्मसमवेता, तस्माज् ज्ञेयत्वं ज्ञानसाधनत्वं च मनसो न दोषमर्हतीति।

येतु प्रदीपप्रकाशो यथा न प्रकाशान्तरमपेक्षते, एवं प्रमाणान्तरमनपेक्षमाणान्यपि सन्ति भविष्यन्तीत्याचार्यदेशीया मन्यन्ते, तान् प्रत्याह।

क्वचि–न्नतः ( सू. १९ ) ॥ यथाऽयं प्रसङ्गः प्रमाणानामनपेक्षत्वप्रसङ्गः, प्रदीपे प्रदीपान्तरानपेक्षया प्रकाशकत्वदर्शनात्प्रमाणान्तरानपेक्षाण्येवालोकवत्प्रमाणानि सेत्स्यन्ति, एवमर्थमुपादीयते प्रसङ्ग, प्रमेयाण्यप्यनपेक्षाण्येव सेत्स्यन्तीत्येवमर्थमप्युपादेयः, तथा च प्रमाणाभाव इत्यर्थः। तदेवं प्रदीपदृष्टान्ताश्रयणेन प्रमाणाभावप्रसङ्गमुक्त्वा स्थाल्यादिदृष्टान्तोपादाने तु प्रमाणस्यापि प्रमाणान्तरापेक्षेत्याह। यथा च स्थाल्यादिरूपग्रहण इति। तदेतद्भाष्यं व्याचष्टे वार्तिककारः, यथा प्रदीपप्रकाशः सजातीयानपेक्षस्तथा प्रमाणानि सजातीयानपेक्षाणि न पुनर्यथा स्थाल्यादिरूपं प्रमाणापेक्षं तथा प्रमाणान्यपि प्रमाणापेक्षाणीति। कस्मात्पुनः स्थाल्यादिरूपं प्रमाणापेक्षमित्यत आह। स्थाल्यादिरूपप्रकाशने चेति। २००।१८ प्रदीपप्रकाशस्तत्र प्रमाणमिति लोकसिद्धमित्यर्थः। कस्मादेवं स्थालीरूपवन्न प्रमाणानि, तान्यपि प्रमाणान्तरेण प्रकाश्यन्तामित्यर्थः। तदनेन प्रदीपदृष्टान्तेन निरपेक्षत्वं न तु स्थाल्यादिदृष्टान्तेन सापेक्षत्वमित्यत्र नियमहेतुर्नास्तीत्युक्तं, नियमान्तरहेत्वभावमाह। अयं च प्रदीपप्रकाशदृष्टान्त इति। यथा हि प्रमाणानि प्रदीपदृष्टान्तेन निरपेक्षाणि, एवं तेनैव दृष्टान्तेन कस्मान्न प्रमेयाण्यपि,

ततश्च प्रमाणाभावप्रसङ्गः । न हि प्रमाणानामेव प्रदीपो दृष्टान्तो न प्रमेयाणामिति नियमहेतुरस्ति । तदनेन यथा प्रसङ्ग इति भाष्यं व्याख्यातम् । प्रदीपप्रकाशो दृष्टान्तो भवतीति त्यनेनायमेव दृष्टान्तो नायमिति नियमो निराकृतः, पूर्वेण तु प्रदीपदृष्टान्तेन निरपेक्षत्वमेव न तु स्थालीदृष्टान्तेन सापेक्षत्व- मित्ययं नियमो निराकृत इति न पुनरुक्तम् । प्रकाशकत्वादिना तु हेतुना संगृहीतः प्रदीपदृष्टान्तो भवतीति नियमः शक्यो वक्तुम् । केवलं प्रकाशकत्वं सजातीयान्तरानपेक्षत्वे साध्ये विक- ल्पनीयं, किमत्यन्तसजातीयमाहो सजातीयमात्रं, यद्यत्यन्तस- जातीयं ततः सिद्धसाधनं, न हि चक्षुरादि प्रमाणं स्वग्रहणे चक्षुराद्यन्तरमपेक्षते, अथ कथञ्चित्सजातीयं, तदपेक्षत्वमालोक- स्याप्यस्ति, तस्यापि चक्षुराद्यपेक्षत्वात्ततश्च साध्यहीनो दृष्टान्तः, विरुद्धश्च हेतुर्विषयज्ञानमपि विषयज्ञानेन न गृह्यते किंतु ज्ञान- विषयेण ज्ञानेनेति नात्यन्तसजातीयमिति, तदनेनाभिप्रायेण वार्तिककृतोक्तमनेकान्त इत्ययं दोषो न भवति । (२०१ । ३) दोषान्तरं तु भवतीत्यर्थः । इतरग्रन्थस्तु सिद्धान्तं दर्शयद्भिर- स्माभिरुपपादितार्थ इति न व्याख्यातः । येनानवस्थामुपा- ददीतेति सोपहासम् ॥ १९ ॥

प्रत्य-त्र ( सू० २० ) ॥ प्रत्यक्षलक्षणं चानेन सूत्रेणो- च्यते प्रत्यक्षस्वरूपं वा, न तावत्प्रत्यक्षकारणमित्याह । यदिदं भवता प्रत्यक्षलक्षणमुच्यत इति । प्रत्यक्षकारणमित्यर्थः । कारणे सति कार्यं लक्ष्यते ज्ञानमिति । द्वितीयं कल्पं शङ्कते अथेति । ( २०२ । १ ) सिद्धान्तवाद्याह । नोभयथाऽपीति । लक्षणपक्ष एव सिद्धान्तोऽभिमतः, कारणपक्षाभ्युपगमः प्रौढि- वादेन द्रष्टव्यः । सकलप्रत्यक्षव्यापकमसाधारणं कारणमवधा-

र्येते । न हीदृशमन्यत्कारणमात्ममनःसंयोगो वा इन्द्रियमनःसंयोगो वा प्रत्यक्षस्यास्ति, पूर्वस्य साधारणत्वाद् उत्तरस्य चाव्यापकत्वादिति । समाधानान्तरमाह, अर्थतो वेत्यादिना मनःसन्निकर्षोऽपि कारणमित्यन्तेन ॥ २० ॥

तदेवं सिद्धान्तसारमुक्तं नात्ममनसोरित्यादिसूत्रमपठित्वैव भाष्यकारो व्याचष्टे। न चासंयुक्ते द्रव्य इति । सर्वं हि कारणजातं कार्योपजननाय परस्परसमवधानमपेक्षते, अन्यथा यत्र तत्र स्थितेभ्योऽपि कारणेभ्यः कार्यमुपजायेत । तदात्मनाऽपि मनःसंबद्धेन कार्यं जनयितव्यं, सम्बन्धश्चात्ममनसोः संयोग एव । भवतु वा संयोगजं ज्ञानम् , अर्थेन्द्रियात्मसंयोगजं कस्मान्न भवति, कृतं मनःसंयोगेनेत्यत आह । मनःसन्निकर्षे इति । तस्मादात्ममनःसन्निकर्षोऽपि वक्तव्य इति पूर्वपक्षः । तदिदं नात्ममनसोः सन्निकर्षेत्यादिसूत्रं पाठस्य पुरस्तात्कृतभाष्यम् । तदेतद्वार्तिककारो भाष्यमनुभाष्य पूर्वपक्षसूत्रं पठति ।

नात्म-त्तिः ( सू. २१ )॥ सूत्रार्थमाह । आत्ममनसोरिति । पूर्वपक्षस्य क्षणमप्यवस्थानमसहमानो वार्तिककारः प्रतिषेधमस्योक्तं स्मारयति । नोक्तेति । ( २०३ । २ ) ॥२१॥

तदेवं द्वाभ्यां सूत्राभ्यां पूर्वपक्षिते सति भावमात्रेण इन्द्रियार्थसन्निकर्षादीनामनेन कारणत्वमुक्तमिति मन्यमानः पार्श्वस्थः प्रत्यवतिष्ठते । सति चेन्द्रियार्थेति (१)। न सति भावमात्रेण कारणत्वमाकाशादीनामपि कारणत्वप्रसङ्गात् । तादृशश्चात्ममनःसंयोग इन्द्रियात्मसंयोगश्चेति न कारणं युक्तमित्यर्थः ।

दूषयति । अकारणभावेऽपीति । नान्वयमात्रात्कारणत्वनिश्चयः, अपित्वन्वयव्यतिरेकाभ्यां, न च दिगादावस्ति व्यतिरेकः,

---

( १ ) भाष्यस्थमिदं प्रतीकम् ।

नित्यत्वविभुत्वाभ्यामवर्जनीयःसन्निधिः,सेन्द्रियशरीरवर्त्यात्ममनः-संयोगस्त्वन्वयव्यतिरेकावधृतसामर्थ्यः, सुप्तस्य ज्ञानानुत्पादात् । इन्द्रियार्थसन्निकर्षे त्वमति विप्रकृष्टे व्यवहिते च ज्ञानं न जायते, इन्द्रियमनःसन्निकर्षाभावे तु नायुगपज्ज्ञानानि भवन्ति, तस्मान्नाकाशादिभिरतिप्रसङ्ग इति । तदेतद्वार्तिककारो व्याचष्टे । येच सति भावात् कारणभावं वर्णयन्ति पूर्वपक्षिणश्च सिद्धान्तिनो वा असति न भवतीति वादागन्तव्यारेको *न तु प्रयोजकस्तान् प्रति पार्श्वस्थो ब्रूते । तेषां दिग्देशेति । यथा चान्द्रमसं रूपमिति । यद्यपि तत्रापि तेजस्यौष्ण्यमस्ति तथाऽप्यत्यन्ताभिभवेन स्वोचितार्थक्रियानुपयोगादसत्कल्पत्वमित्यर्थः ॥ २२ ॥

एवं पार्श्वस्थे निरस्ते पूर्वपक्षी ब्रूते । यद्येवमिति (२०४ । २) सिद्धान्त्याह । नोपसङ्ख्येय इति ।

ज्ञान-धः ( सू. २३ )॥ अत्र ज्ञानस्यात्मलिङ्गत्वमुच्यते, ज्ञानं तावत्कार्यमनित्यत्वाद् घटवत् । ( तच्च ) क्व चित् समवेतं कार्यत्वाद् घटवत् । न च तत्पृथिव्याद्याश्रितं मानसप्रत्यक्षत्वात् । यत्पुनः पृथिव्याद्याश्रितं तत् प्रत्यक्षान्तरवेद्यमप्रत्यक्षमेव वा । न च तथा ज्ञानं द्रव्याष्टकातिरिक्ताश्रितम । तदाश्रयश्च द्रव्यजातीयः, समवायिकारणत्वादाकाशवत् । तस्य च विभुत्वमात्मलक्षणेऽस्माभिरुक्तम् । अतो गुणजातीयं ज्ञानं, कार्यत्वे सति विभुद्रव्यसमवायाच्च् शब्दवत् । एवं व्यवस्थिते प्रश्नोत्तरे वार्त्तिकगते व्याख्यातव्ये । आत्मसमवायादिति । कार्यत्वे सति विभुद्रव्यसमवायादित्यर्थः । विभुद्रव्यसमवाय एवासिद्ध इति वदत आह । न पृथिव्यादिगुणः स्वसंवेद्यत्वात । मानसप्र-

---

* अयं पाठोऽसंलग्नः ।

त्यक्षवेद्यत्वादिरर्थः । स्वपरसंबद्धं प्रत्यक्षान्तरवेद्यं द्रष्टव्यम् । अन्यथा पृथिव्यादिगुणेन द्वित्वादिना व्यभिचारः स्यादिति । तस्माज् ज्ञानलिङ्ग आत्मा, न त्वसावसंयुक्तो ज्ञानं जनयति । तस्य सदातनत्वे सदा ज्ञानोत्पादप्रसङ्गात् । तस्मात्संयोगभेदं कादाचित्कमपेक्षत इत्यर्थात्सिद्ध आत्मगनःसंयोग इति न सूत्रकृतोक्तः । प्रौढिवादितयैष समाधिरिति दर्शयितुमुक्तमेव परमसमाधिं स्मारयति । उक्तं चात्रेति ॥ २३ ॥

अन्यार्थमिति । प्रमेयभूतमनःस्वरूपप्रतिपादनार्थम् । अन्यार्थस्यापि तदर्थप्रकाशकत्वम् ( २०५ । २ ) उपपत्तिः । लिङ्गम् । ईदृशं हि तल्लिङ्गं यदन्यार्थमपि मनसो ज्ञानकारणत्वं प्रतिपादयतीति । न हि ज्ञानं स्वतन्त्रं येन स्वकारणं मनो नापेक्षेत, नापि चक्षुरादि स्वतन्त्रं ज्ञानजनने येन मनो ज्ञानकरणं न स्यादित्याह । न चक्षुरादीति । तस्मादर्थप्राप्तत्वादात्मनःसंयोग इन्द्रियमनःसंयोगश्च नोक्तौ सूत्रकारेण ॥ २४ ॥

देशयति । अथ कस्मादिति । इन्द्रियार्थसन्निकर्षेऽप्यर्थतः प्राप्तिरविशिष्टेति भावः । परिहरति । प्रत्यक्षेति । सर्वानभिधाने हि प्रत्यक्षं न लक्षितं स्यादिति तल्लक्षणाय किञ्चिद्वक्तव्यम् । तत्रेन्द्रियार्थसन्निकर्ष एव वक्तव्यः, समस्तप्रत्यक्षव्यापकत्वात् नेतरावव्यापकत्वादतिव्यापकत्वाच्चेति परमः समाधिः ॥ २५ ॥

सुप्त-त्व ( सू. २६ ) ॥ ज्ञानोत्पत्तेरिति सूत्रशेषः । प्रणिधाय सङ्कल्प्य । प्रदोषे सुप्तोऽर्द्धरात्रे मयोत्थातव्यमिति, सोऽर्धरात्रे एवावबुध्यते । प्रबोधज्ञानमिति । प्रबोधे निद्राविच्छेदे सति द्रव्यस्पर्शस्य संज्ञानं प्रबोधज्ञानमित्यर्थः । सुप्तमनसामिति व्याचष्टे । एकदा खल्वयं विषयान्तरेति ॥ २६ ॥

प्राधान्ये च हेत्वन्तरम् ।

तैश्चा-णाम् ( सू. २७ ) ॥ इन्द्रियैर्व्यपदेशं विग्रहसमासाभ्यां ज्ञानस्य दर्शयति । घ्राणेति । इन्द्रियविषयसङ्ख्यानुरोधात्तज्ज्ञानस्य तद्व्यपदेश इत्याह । इन्द्रियेति । वार्त्तिकं-यच्चासाधारणं तेनेति । दिगादिरप्युपाधिकल्पितेन प्राचीत्वादिना कार्यं विशेषयन्नसाधारणमेवेत्यभिप्रायः ॥ २७ ॥

अनेन प्रबन्धेनेन्द्रियार्थसन्निकर्ष एव कारणं ज्ञानस्य, न त्वात्ममनःसन्निकर्ष इन्द्रियमनःसनिकर्षो वा ज्ञानकारणमनेनोक्तमिति मन्वानो देशयति ॥

व्याह-तुः ( सू. २८ ) ॥

परिहारसूत्रम् ॥

नार्थ-त् ( सू. २९ ) ॥ अनेनेन्द्रियार्थसन्निकर्षस्य प्राधान्यमात्रमुच्यते । न त्वात्ममनःसंयोगस्येन्द्रियमनःसंयोगस्य वाऽकारणत्वमुच्यत इति न व्याघात इत्यर्थः । पृच्छति । असति संकल्पे प्रणिधाने चेति । यत्नः । प्रणिधानम् । सङ्कल्प इच्छा । उत्तरं । यथैवेति । नन्वस्य जात्यायुर्भोगनिमित्तत्वमवगतं, न तु मनःप्रेरकत्वमपीत्यत आह । तेन ह्यप्रेर्यमाणे मनसीति । भोगो ह्यदृष्टस्य प्रधानं प्रयोजनं तन्नान्तरीयकतया जन्मायुषी आक्षिपति । स्वसम्बन्धिसुखदुःखसाक्षात्कारश्च भोगः, तदायतनं च शरीरम् । अप्राप्तं च मनो न तत्र भोगं च भोगविषयौ सुखदुःखे च तयोः कारणं च ज्ञानं जनयितुमर्हति, नूनं तत्प्राप्तिहेतोर्मनःकर्मणः कारणमदृष्टं वक्तव्यम् । अन्यथाऽस्य सर्वद्रव्यगुणकर्मकारणता न स्यात् । मा भूत्सर्वार्थतेत आह । एषितव्यं चास्येति । अणूनां विशेषणं भूतसूक्ष्माणामिति ।

व्याहतत्वादिति पूर्वपक्षसूत्रम् । अस्य तात्पर्यमाह वार्त्ति-

ककारः । अनेनेति । ( २०६ । ७ ) नन्वियं त्रिसूत्री इन्द्रियार्थसन्निकर्षस्य प्राधान्यमाह, न पुनः संयोगान्तरस्य कारणत्वं प्रत्याचष्ट इत्यत आह । इयं किलेति । कारणत्वं प्रतिषिध्यत इत्यभिमानः पूर्वपक्षिण इत्यर्थः । दृष्टव्याघात इति । अयौगपद्यं दृष्टं, तस्य व्याघात इत्यर्थः । शेषं तु भाष्यव्याख्यया व्याख्यातमिति ॥ २९ ॥

अतः परमिदानीमिति । ( २०७ । १२ ) न ह्यवयवी नाम कश्चिदर्थान्तरभूतोऽवयवेभ्योऽस्ति, अपि त्ववयवा एव परमार्थसन्तः, तेषु च कतिपयानवयवान् गृहीत्वा तत्सहचरितानवयवाननुमाय प्रतिसन्धानजेयं वृक्षबुद्धिस्तानेवावयवानालम्बमानाऽनुमानमिति प्रत्यक्षस्यानुमानेऽन्तर्भावाद्विभागसूत्रेण न्यूनाधिकसङ्ख्याव्यवच्छेदो नोपपद्यत इत्यर्थः । निराकरोति । न यथासम्भवं विकल्पानुपपत्तेः । एकदेशो ह्यवयविन आधार इति । ( २०८ । १४ ) एकश्चासौ देशश्चेत्येकदेशः । देशश्चाधारो न चाधेयोऽस्त्यवयवीति कथमाधार इत्यर्थः । अहो शब्दार्थकौशलमिति । शब्दे ऽर्थे वा कौशलमित्यर्थः । अर्थे तावदकौशलमाह । अकार्येति । कार्यस्यैकस्य कारणानां तदेकं कार्यं कर्तुं परस्परप्रत्यासत्तिर्भवति । यथा मृद्दण्डचक्रसूत्राणां घटे जनयितव्ये प्रत्यासत्तिः । कार्याणां चैकसामग्रीजन्मनां परस्परप्रत्यासत्तिः, यथा रूपरसगन्धस्पर्शानां, कार्यकारणयोर्वा, यथा अग्निधूमयोः, येषां तु न कार्यकारणभावो नैककार्यत्वं वा नैककारणत्वं वा, तेषां कुतो नियमवती प्रत्यासत्तिरित्यर्थः । शब्दाकौशलमाह । न च परस्परेति । अवयविनं दधदवयवान्तरमवयवान्तरमपेक्षते । ततश्चावयवाः परस्परोपकारिणो भवन्ति । अवयव्यभावे तु न परस्परोपका-

रिणः कथमवयवा इत्यर्थः । न चावृक्षप्रतिसन्धानजेति । स्वस्तिमतीं हि गां गृहीत्वा कालाक्ष्यां गवि गौरिति प्रतिसन्धानं दृष्टं, न त्वश्वं गृहीत्वाऽश्वान्तरे गौरिति प्रतिसन्धानं दृष्टं, तत्कस्य हेतोः, तयोरगोत्वात्,—एवमर्वाग्भागपरभागानामवृक्षत्वाद्वृक्ष इति प्रतिसन्धानं न भवेदित्यर्थः। यद्युच्येत मा भूद्वृक्षरूपधर्मिग्रहः, पूर्वमर्वाग्भागं धर्मिणं वृक्षविशेषमनुमाय प्रतिसन्धास्यतीत्यत आह। न चानुमानम्। ( २०९। ६ ) कस्मादित्यत आह। अनुमान इति। नायमनुमाता पूर्वमनुपलभ्याग्निमनुमानेन च धूमविशेषणमग्निं प्रतिपद्य प्रतिसंधत्ते अयं धूमोऽयं चाऽग्निरिति। अथ पूर्वं प्रतिसंधानं पश्चादनुमानमित्यत आह । न च प्रतिसन्धायेति । प्रतिसन्धानसमय एवाग्नेरवगतत्वाद्भवितव्यमत्राग्निनेति व्यर्थमनुमानं स्यादित्यर्थः। अभ्युपेत्याह। प्रतिसन्धायापि चेति। किं चार्वाग्भागमथमिति। स भागवान् भागो न भवति किं तु भाग एव। कस्मान्न पश्यतीत्यत आह। नार्वाग्भागपरभागौ संबद्धौ। ( २१०। ४ ) एकावयविसमवायेन हि परस्परसम्बद्धौ स्यातां, न चावयव्यस्ति, न चापि संयुक्तौ, संयोगस्यावयविनिरासमार्गेण निरस्तत्वादित्यर्थः। पृच्छति। कथं पुनरिति। उत्तरं नित्यमर्वाग्भागेनेति। सम्बन्धस्तावन्नास्तीत्युक्तमेव। तमभ्युपगम्य तूत्तरं—सत्यं सम्बद्धौ सत्यपि सम्बन्ध अशक्यग्रहोऽसावित्यर्थः। सत्यं सम्बद्धावित्ययमभ्युपगमवाद एव। यच्चेदमुच्यते प्रतिसन्धानप्रत्ययजेति। पूर्वं सत्यपि वृक्ष अवयवानामवृक्षत्वान्नावयवे प्रतिसन्धानजा वृक्षबुद्धिरित्युक्तं, सम्प्रति तु वृक्षस्यासत्त्वेन नावयवे वृक्ष इति प्रतिसन्धानमित्यपौनरुक्त्यम्। रूपं च यथोप-

लब्धं रसश्चेति । य एवोपलब्धा रसप्रत्ययोपरञ्जितः स एव रूपप्रत्ययोपरञ्जित इत्यर्थः । प्रमाणस्य यथाभूतार्थपरिच्छेदकत्वादिति । यथा भ्रान्तमप्यनुमानमर्थसम्बन्धेन प्रमाणमिति न भवति, तथा प्रथमेऽध्याये दर्शितम् । प्रधानानुकारेण ( २११ । १ ) भ्रान्तिरिति विपरीतख्यातौ सत्यां, सा चोपपादिता प्रथमाध्याये । न तथा शब्दस्यार्थानभिधानादिति । कः पुनरयं तथाशब्दार्थः । परमाणूनां रूपं वा नैरन्तर्यं वा संयोगभेदो वा उत्पादभेदो वा । यदि रूपमात्रं, तद् घटादिष्वपीति वृक्षबुद्धिः स्यात् । अथ रूपभेदः, क्षणान्तरेणावृक्षः स्यात् । न हि तत्पूर्वं रूपम् । अथ नैरन्तर्यं, तद् घटादिष्वप्यस्ति । न वा क्वचिदपि, गन्धरसरूपस्पर्शपरमाणुव्यवधानात् । न संयोगो भवद्भिरास्थीयत इति कुतस्तद्भेदः । उत्पादभेदोऽपि परमाणूनां रूपमेव । न हि परमाणुव्यतिरिक्तः कश्चिदस्ति तेषामुत्पादः । रूपं च पूर्वं विकल्पितम् । यदि हि कश्चिदवयवसन्निवेशो वास्तवः पूर्वापरभागादिशब्दप्रवृत्तिहेतुरुपलब्धः स्यात् ततस्तथाशब्दार्थः प्रतीयेत, न तु भवतां कश्चिदेष वास्तवः, वस्तुसतां परमाणूनामभागत्वादित्यर्थः । सामान्यतोदृष्टे धर्मिविषयकमपि प्रत्यक्षं नास्तीति भ्रान्तः पृच्छति । सामान्यतोदृष्टस्येति । ( २१२ । ६ ) उत्तरम् । अयं विशेष इति । द्विकस्य प्रत्यक्षेण प्रसिद्धौ सामान्यतोदृष्टं प्रवर्त्तते । त्रिकस्य तु प्रत्यक्षेण प्रसिद्धौ प्रत्यक्षतोदृष्टमिति विशेषः । सर्वस्याप्रत्यक्षत्वाद् वृक्षबुद्धिर्न प्रत्यक्षतोदृष्टादनुमानादपि सामान्यतोदृष्टादित्याह । भवत्पक्षे त्विति ॥३०॥

न प्र–त ( सू. ३१ ) ॥ न प्रत्यक्षस्यानुमानता । कुतः यावदेकदेशभूतस्यार्थजातस्य ग्रहणमेकदेशग्रहणादुपलब्धेरित्यत्र

हेताविष्यते तावदपि प्रत्यक्षेण । अन्यथैकदेशग्रहणाभावेनानुमानानुदयात् । अनुमानान्तरेण वा तद्ग्रहणे अनवस्थापातात् । अतस्तावतोऽर्थजातस्य प्रत्यक्षेणोपलम्भात्तावत्प्रत्यक्षमनुमानमिति प्रतिज्ञा हेतुना एकदेशग्रहणानुपलब्धेरित्यनेन बाधिता, एकदेशग्रहणस्य प्रत्यक्षेणानभ्युपगमे वा प्रमाणान्तरस्य तत्रानुपपत्तेरसिद्धो हेतुः, सेयमुभयतस्पाशा रज्जुरित्यर्थः ।

अनुमानेनैकदेशग्रहणान्नासिद्धो हेतुरित्यत आह भाष्यकारः न चैकदेशग्रहणमिति । अनुमितिरनुमानम् । भावयितुं कर्तुम् अनवस्थाप्रसङ्गेन हेत्वभावादिति । तदेतत्सूत्रं वार्तिककरो व्याचष्टे । विरुद्धश्चायमिति । नन्वेकदेशप्रत्यक्षत्वेऽपि तन्मात्रं प्रत्यक्षं, न तु सर्वं प्रत्यक्षं स्यादित्यत आह । न चैवं प्रतिज्ञायते सर्वमिति । अप्रकारवदिति । अनुमानस्य हि त्रयः प्रकारा यादृशा न तादृशाः प्रत्यक्षस्येति । त्रिकालविषयत्वाच्चेति । अनेन परोक्षार्थत्वं सूचयत्यनुमानस्य, प्रत्यक्षं त्वपरोक्षार्थविषयं, तस्मादपि भेद इत्यर्थः । लिङ्गपरामर्शज्ञानस्य प्रत्यक्षफलस्यापि प्रमाणस्य सतो लिङ्गलिङ्गिसम्बन्धस्मृत्यनुग्रहोऽस्त्युत्पत्तौ, न त्वेवं प्रत्यक्षस्य प्रमाणस्य, अत उत्पत्तौ वा कार्ये वा लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षेत्यर्थः । अन्यथाऽपि चेत्यादि भाष्यं व्याचष्टे इतश्चेति । ( २१ ३ । ४ ) न त्वेतदनुमानमित्यादिभाष्यार्थमाह । इन्द्रियेति । इन्द्रियसम्बन्धाच्चार्थस्य प्रत्यक्षमुत्पद्यते, न त्वनुमानमेवमित्यर्थः ॥ ३१ ॥

अपि चावयविनोऽसत्त्वं मन्यमानेन त्वयैकदेशमात्रोपलब्ध्या वृक्षबुद्धेरनुमानत्वमुक्तं, न त्वियमेकदेशमात्रोपलब्धिरपि तु तस्य तत्सहचरितस्य चावयविन उपलब्धिलक्षणप्राप्तस्य सिद्धेरित्याह । न चैकदेशोपलब्धिरिति । तदेतद्भाष्यमनुभाष्य वा-

र्तिककारो व्याचष्टे । न चेति । अत्र देश्यभाष्यम् । अकृत्स्न-ग्रहणादिति चेत् । उत्तरभाष्यं न कारणत इति । देश्य-विवरणम् । न चावयवा इति । एकदेशग्रहणनिवृत्त्यर्थं हि त्वयाऽवयविग्रहणमास्थीयते, न चैतावता कृत्स्नग्रहणसम्भवो यत एकदेशग्रहणनिवृत्तिः स्यात् । न ह्यवयविग्रहणे कृत्स्ना अप्यवयवा गृहीता भवन्ति । नाप्यवयवी, तस्यार्वाग्भागस्य ग्रहणेऽपि मध्यमपरभागस्थस्याग्रहणादिति देश्यभाष्यार्थः ।

तदेतद्भाष्यं वार्तिककारो व्याचष्टे । नावयविन उपलब्धिरिति । यत्खलु बहुषु वर्त्तते तत्प्रत्येकं समष्ट्या वा, यथा कलविङ्ककण्ठगुणः । एकदेशेन वा यथा स्रक्सूत्रं कुसुमेषु । न च कृत्स्नैकदेशाभ्यां प्रकारान्तरमस्ति । अनयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् नित्यत्वानित्यत्ववदिति । न चैकत्र कृत्स्नसमाप्तावन्यत्र तस्यैव सम्भव इति, तथा सति कृत्स्नसमाप्तेरभावात्, तस्माद्योऽवयवान्तरे दृश्यते नासाववयवी, तथा चावयवा एवेति प्राप्त मित्यपि द्रष्टव्यम् । न ह्यस्य कारणव्यतिरेकेणेति । ( २१ ४ । ८ ) यदि ह्येकदेशान्तराण्यस्य स्युः, ततस्तेष्वपि वृत्तावेकदेशान्तरकल्पनायामनवस्थाप्रसङ्ग इत्यर्थः । पूर्वपक्षवाद्येव प्रश्नपूर्वकं क्रियातिपत्तिमाह । अथोपलभ्यमान इति । उत्तरभाष्यविवरणपरं भाष्यं कृत्स्नमिति वै खल्वित्यादि । तदेकग्रन्थतया अङ्ग तु भवानित्यादिसम्बोधनोपक्रमं भाष्यं व्यवस्थितम् । तदेतद्वार्तिककारो व्याचष्टे । एकस्मिन्निति । अयमभिसन्धिः यत्तावत्कुसुमेष्वेकदेशेन वर्त्तमानं दृष्टमिति, तदनुपपन्नं, यदि कुसुमेषु सूत्रावयवा वर्त्तन्ते किमायातमवयविनः सूत्रस्य । न ह्यन्यस्मिन्वर्त्तमाने अन्यद्वर्त्तत इत्युक्तम् । न चावयविनोऽभावे

चरो नालीकमिति कस्य वस्तुना सह सादृश्यायान्यव्यावृत्ति-रूपता ऽऽस्थीयते। अपि चालीकस्य समस्तसामर्थ्यविरहिणो ऽत्यन्तविसदृशस्य समर्थेन स्वलक्षणेन विधिरूपेण किं सादृश्यम्। अन्यव्यावृत्तिरिति चेत्। नन्वन्यव्यावृत्तिर्भाविकी स्वलक्षणस्य स्वभावो वा अन्यो वा न तत्स्वभावो विधिरूपेण विरोधात्। अविरोधे वा विधिनिषेधयोरेकत्वाद्विधिरूपतानिषेधेनालीकस्य स्वलक्षणसारूप्यायाऽन्यव्यावृत्तिरूपतोपपादनमनर्थकम्। विधिरूपेणातुच्छेन तुच्छस्य सारूप्यमनुपपन्नमिति चेत्। हन्त भोः स्वलक्षणस्यास्ति किं तुच्छमपि रूपं येनालीकस्य तुच्छस्य सारूप्यं स्यात्। तथा सत्ययमेकस्य स्वलक्षणस्य तुच्छातुच्छाविरुद्धस्वभावद्वयसमावेशमभ्युपगच्छन् श्लाघनीयप्रज्ञो देवानांप्रियः। न च स्वलक्षणादन्यव्यावृत्तिरलीकमन्यव्यावृत्तं स्वलक्षणेन सरूपयति तथा सति हस्तिमशकावपि रासभः सरूपयेत्* धर्मो न च स्वलक्षणधर्मो व्यावृत्तिर्भवद्भिरभ्युपेयते।

स्यादेतत्। अध्यवसीयमानमपि स्वलक्षणं न परमार्थसत्, अपि तु तदपि कल्पितं, तस्मात्तस्य विधिनिषेधरूपता न विरुध्येत, वस्तुनि हि विरुद्धधर्माध्यासो विरुध्यते नावस्तुनि तेनास्य विधिरूपपरित्यागेन निषेधरूपतामुपादायाऽलीकस्य सारूप्यमुपपद्यते। यथाऽऽह--

"यच्च गृह्यते यच्चाध्यवसीयते ते द्वे अप्यन्यव्यावृत्ती न वस्तुन" इति।

अथालीकस्य स्वलक्षणस्यालीकसादृश्ये किं सिध्यति। न तावत् तत्र प्रवृत्तिः असतः प्रवृत्तिविषयत्वायोगात्। सतस्तु प्रवृत्तिविकल्पस्य न सादृश्यमसता सादृश्ये वा वृथा अली-

* धर्म इति पु० नास्ति।

कस्वलक्षणाभ्युपगमः । अथ न वयमलीकं स्वलक्षणान्तरमा-
तिष्ठामहे किं त्वलीकस्यैव दाहपाकादिकसामर्थ्यारोपम् । न
तत्स्वलक्षणं तस्य सर्वतो व्यावृत्त्या अभिलापसंसर्गायोग्यत्वेन
विकल्पज्ञानप्रतिभासाभावात् । अभिलापसंसर्गयोग्यस्य चा-
न्वयिनो ऽस्वलक्षणत्वात् । तस्मात्स्वान्वयिनो ऽन्यव्यावृत्ति-
रूपस्यासमर्थस्यापि सामर्थ्यं समारोप्य तत्तदर्थिनो व्यवह-
र्त्तॄन् प्रवर्त्तन्ते लोकविकल्पाः पारम्पर्येण सम्बन्धात्समर्थं व-
स्तु प्रापयन्तो न विसंवादयन्ति लोकमिति युक्तमुत्पश्यामः ।
अथास्य अतदर्थक्रियासामर्थ्यारोपः किं दृष्टार्थक्रियास्वल-
क्षणसालक्षण्येनाहो स्विदनादिवासनावशात् । तत्र स्वलक्ष-
णेन सर्वतो व्यावृत्तेन समर्थेन समस्तसामर्थ्यविरहिणोऽन्वयिनो
न किंचिदस्ति सारूप्यम् । अन्यवृत्त्या तु सारूप्ये विधिरूपेणापि
प्रसङ्गः । तस्यास्ततो भेदाभावादित्युक्तम् । अनादिवासनावशा-
त्तु तदारोपे प्रथमदर्शने ऽपि नालिकेरद्वीपागतस्य वह्नौ दाह-
पाकादिसामर्थ्यज्ञानप्रसङ्गः । वह्निस्वलक्षणाद्दाहपाकादिकारि-
णो भेदाग्रहादलीकस्य तद्रूपसमारोप इति चेत् । किं स्वलक्षणे
गृह्यमाणे अथागृह्यमाणे । न तावद्गृह्यमाणे तस्य विकल्पज्ञानगो-
चरत्वाभावादित्युक्तम् । तत्समयभावि त्वविकल्पकं तत्त्वं गृह्ण-
दपि न विकल्पे स्वविषयं निवेशयति । तस्य ततो ऽन्यत्वेन
तद्वार्त्तानभिज्ञत्वात् । एवं विकल्पज्ञानमपि समनन्तरोत्पन्ननिर्वि-
कल्पकव्यापारपारम्पर्ये ऽपि न स्वलक्षणं गोचरयितुमर्हति । त-
स्याभिलापसंसर्गयोग्यप्रतिभासविषयत्वादित्युक्तम् । समनन्तर-
प्रत्ययादविकल्पादुत्पत्तेस्तद्व्यापारपारम्पर्यादतद्गोचरो ऽपि तद्गो-
चर इवाभासतइति चेत् । अनुभववासनाभावेषु भवेदपीयं ग-
तिर्न तु परोक्षाभावावगाहिष्वविद्यावासनाप्रभवेषु संभवति । अ-

पि चानुभववासनाप्रभवस्यापि तद्गोचरत्वाभिमानस्तस्मिन्नप्रथमाने तदुत्पत्तिमात्रान्न भवितुमर्हति। अगृह्यमाणे तु वह्निस्वलक्षणे ततो भेदाग्रहेण तद्रूपारोपे त्रैलोक्यरूपारोपप्रसङ्गो नियमहेतोरभावात्। न हि तदानीमगृह्यमाणतया त्रैलोक्याद्वह्निस्वलक्षणस्य कश्चिद्विशेषः वह्निस्वलक्षणविषयानिर्विकल्पकप्रभवत्वेन तस्मिन्नियमे अविद्यावासनाप्रभवेषु प्रधानेश्वरादिविकल्पेषु तदभाव इति नियमो न स्यात्। न चाग्रहेण तदारोपसंभव इत्युक्तम्। तस्मादलीकस्य बाह्यत्वं विकल्पगोचर इति रिक्तं वचः। अपि च ज्ञानाकारवत्स्वलक्षणवच्चालीकग्राह्यत्वमपि न विकल्पगोचरो भवितुमर्हति। एतद्धि कल्पनाधीनमुत्पन्नायां कल्पनायामुत्पन्नमिव विनष्टायां नष्टमिव विकल्पनाभेदे भिन्नमिव न शक्यमेकत्वेन प्रतिकर्त्तुम्। भेदानवमर्षादिति चेत्। किमस्यानवमृष्टमपि तत्त्वम्। ओमिति चेत्। न तर्हि कल्पितम्। ननु नास्य भेदो ऽपि स्वाभाविकः स्वाभाविको हि भेदाभेदाभ्यां युज्यते न त्वलीकम्। मा भूद्भेदो ऽस्य स्वाभाविकः कल्पनाधीनं तु तदलीकं तद्भेदाद्भिन्नं प्रतिपत्तव्यम्। अन्यथा तदधीनत्वापत्तेः। इदमेव हि तस्य विकल्पितस्य कल्पनाधीनत्वं यत्कल्पनाभेदाभेदानुविधानं नाम तदधीनत्वे तु कल्पितत्वानुपपत्तेरनलीकत्वप्रसङ्गात्। तन्मा नाम भूतामस्य स्वाभाविके नानात्वैकत्वे न तु भिन्नकल्पनाऽनुपाति शक्यमेकत्वेन प्रतिपत्तुमिति भिन्नं प्रतिपत्तव्यम्। तत्सिद्धं विकल्पागोचरत्वमलीकबाह्यस्य अभिलापसंसर्गायोग्यत्वात्सुखादिस्वलक्षणवदिति। अभिलापसंसर्गायोग्यं हि तत् तेनाशक्यसमयत्वात् सुखादिलक्षणवदिति। शक्यसमयतया खल्वभिलापसंसर्गयोग्यता व्याप्ता अन्यथा ऽतिप्रसङ्गात्। सालीकबाह्यतायाः प्रतिविकल्पं भिन्ना-

या व्यावर्त्तमाना ऽभिलापसंसर्गयोग्यत्वमपि व्यावर्त्तयतीति प्रतिबन्धसिद्धिः । अपि चेदमलीकमगोव्यावृत्तिरूपं वा तद्धर्मो वा । अगोव्यावृत्तिरूपं चेत् । न तदसिद्धं गवि शक्यं ग्रहीतुम् । अगौश्च गोनिषेधात्मेति गोसिद्धिमपेक्षतइति दुरुत्तरमितरेतराश्रयत्वं तद्धर्मत्वे वा गोत्वमेवास्तु भाविकं तद्धर्मो विधिरूपः कृतमलीकेनाविधिरूपेण । तद्धर्माणां तद्भाविकत्वसाधनं च निराकृतं तस्य च भावाभावसाधारण्यमुपपादितं तद्विस्तराद्बिभ्यतो ऽपि बहुतरविस्तरे पतिताः स्म इत्यास्तामेतन्नास्तिकमानोपमर्दनमिति ।

उपचारतो न व्याघात इति चेदिति शङ्कायाः परिहारवार्त्तिकम् । मुख्यासंभवादिति । (३२८।११) सर्वत्र मुख्यपूर्वक उपचारो वा समारोपो वा दृष्टः तव तु राद्धान्ते न विधिविषयः कश्चिदस्ति मुख्यः शब्दो वा विकल्पो वा सर्वस्य निवृत्तिगोचरत्वात् । न चाध्यवसेयो विधिः संभवतीत्युपपादितमधस्तादिति भावः । न चान्यापोहपक्ष उपचारो युक्तः उभयोः प्रधानशब्दत्वादिति । न हि सिंहत्वं नाम किं चिदस्ति सिंहव्यक्तिषु यन्माणवके न स्यात् । अपि तु प्रसह्यकारित्वादिव्युदासो माणवके नास्तीति सिंहव्यक्तिष्विव माणवके ऽपि सिंहशब्दो मुख्य एव स्यादित्यर्थः । किं गौरगौरिति । (३२९।५) अश्वादिरित्यर्थः । प्रैषप्रत्ययपूर्विका प्रैषस्य प्रैषविषये प्रवृत्तिः संप्रतिपत्तिः अङ्गव्यतिरिक्तस्य चाङ्गिनः सेनावनबहुत्वसंख्यादीनां भवद्भिरभ्युपगमादित्यर्थः । क्रियारूपत्वाच्चापोहस्य विषयो वक्तव्य इति । कर्म विषयः क्रियायास्तदुक्तव्यमित्यर्थः । कथमन्यविषयादिति । कथमन्यविषयादपोहादगोविषयाद् गवि प्रतिपत्तिरिति । अथागोरिति । (३३०।२) अस्ति हि

का चित् क्रिया या ऽन्यस्यान्याविषया । यथा विज्ञानमात्मनो ऽर्थः विषयं वेत्यर्थः । निराकरोति । केन गोरिति । क्रिया हि चेतनानां प्रयत्नपूर्वा भवति । अपोहलक्षणा च क्रिया निषेधरूपा निषेधश्च प्राप्तिपूर्वकः न हि गोरगोत्वं केन चित्प्रसञ्जितं यत्प्रेक्षावता व्यपोह्येतेत्यर्थः । कथं चागवीति । अगवीति पदेन यो ऽयं प्रतिषेधो नासौ गोप्रतिपत्तिमन्तरेण भवतीत्यर्थः । अध्यासानुपपत्तेरर्थप्रत्ययो न युक्त इति । अपोहरूपो ऽर्थप्रत्ययो न युक्त इत्यर्थः । किमपोहो वाच्यो ऽथावाच्य इति । अपोहादिशब्देनेत्यर्थः । यदि वाच्य इति । स्वरूपेणैवापोहो वाच्यो न चापोहापोहेनेत्यर्थः । स्यादेतत् । यद्यन्यापोहेन शब्दो न वर्त्तते कथं तर्हि द्व्यादिविशेषेष्वनेकशब्द एकापोहेन वर्तते । न ह्यत्रानेकत्वं नाम गोत्वमिव किं चिदस्ति सामान्यमित्यत आह । अनेकमिति चास्य पदस्य द्व्यादिविषयत्वात् । (३३१।२) सामान्याधिगतावेकत्ववर्जितसंख्यात्वसामान्याधिगतौ विशेष आश्रयितव्यः संख्यात्वसामान्यमेवैकत्ववर्जितं तत्र द्व्यादिविशेषाधिगतिहेतुर्न पुनरन्यापोहमात्रमित्यर्थः । न ह्यसति सामान्यशब्दादेकत्ववर्जितसंख्यासामान्यवाचकादनेकशब्दाद् विशेषाश्रयणे अन्यापोहमात्राद्विशेषाधिगतिरिति योजनीयम् । अब्राह्मणादिशब्दानामपीयमेव गतिः । तत्रापि पुंस्त्वसामान्यमेव ब्राह्मणशब्दार्थ इति । नलिोत्पलशब्दयोश्च प्रधानत्वादिति । अनीलानुत्पलव्युदासौ हि प्रधानौ नीलोत्पलशब्दात्राहतुः न ह्येतयोरस्ति विशेषणविशेष्यभावः परस्परासंबन्धादिति भावः । एतेन नीलोत्पलशब्दयोरस्मिन्सिद्धान्ते प्रधानार्थत्वेन व्युत्पादनेन राजपुरुषशब्दौ व्याख्यातौ प्रधानत्वेन अत्राप्यराजापुरुषव्यवच्छेदयोर्नावच्छेद्या-

वच्छेदकभावः नापि स्वस्वामिभाव इत्यर्थः । समानाधिकरणयोश्चेति । शब्दविकल्पयोः परमार्थतद्वस्तुसंस्पर्शासम्भवादित्यर्थः ॥ ६५ ॥

व्यक्ति-र्तिः (सू. ६६) ॥ यत्र हि व्यक्त्याकृतिजातीनां समावेशस्तत्र व्यक्तिनिर्द्धारणायेदं लक्षणम् । तेनाकाशाद्यनवरोधे ऽपि न दोषस्तत्राकृतेरभावादिति भाष्यमतम् । यथा ऽऽह भाष्यकारः न सर्वं द्रव्यं व्यक्तिरिति । यद्यपि गुरुत्वादयः सामान्यगुणास्तथा ऽपि गुणान्तरेभ्योऽव्यावर्त्तमाना गुणविशेषा इत्युच्यन्ते । अव्यापिन इति । सर्वगतस्य द्रव्यस्य परिमाणं व्यवच्छिनत्ति । मूर्च्छिताः परस्परं संयुक्ता अवयवा यस्य तन्मूर्च्छितावयवम् । कथं पुनरित्यादिभाष्यमाक्षिपति वार्त्तिककारः । अधिगतत्वादिति । स्वरूपागमपूर्वकत्वाद्वाक्यप्रतिपादनस्य स्वरूपावगमो ऽपि तन्नान्तरीयकत्वात्सिद्ध इत्याक्षेपाभिप्रायः । निराकरोति । न निमित्तत्रैविध्ये सति तद्विशेषविषयज्ञापनार्थत्वात् । प्रश्नस्य शब्दप्रवृत्तिनिमित्तानां त्रैविध्ये सति तद्विशेष एव विषयः तज्ज्ञापनमर्थः प्रयोजनं यस्य स तथोक्तः । एतदुक्तं भवति सिद्धं कृत्वा भेदमाभिधेयत्वं त्रयाणां प्रतिपादितम् । संप्रति स एव भेदः प्रतिपाद्यतइति । सूत्रमिति । बहूनामर्थानां सूचनादिति भावः । अत्रभाष्यव्याख्यानमुपन्यस्यति । व्यज्यतइति । (३३२।२) दूषयति एतत्तुनेति । व्यक्तिः पदार्थ इत्येतत् प्रकृतं तत्र यथाऽवयविनो व्यक्तेः पदार्थत्वमेवम् आकाशादीनां चोत्क्षेपणादीनां च तत्तथा लक्षणं व्याख्येयं यथा सर्वं संगृह्यते अन्यथा सूत्रकारो ऽकुशलः स्यात् तदर्थमाह । वयं तु ब्रूम इति । अत्रेदं व्याख्यानम् । व्यक्तिरिति लक्ष्यनिर्देशः शेषं लक्षणम् । गुणविशेषा इति द्वेधा समासः

गुणश्च विशेषश्चेति प्रथमो विग्रहः तेनाकृतिर्निराकृता संगृहीताश्च रूपादयो भवन्ति । तथाऽप्युत्क्षेपणादिव्यक्तेरसंग्रह इति द्वितीयो विग्रहः । गुणेभ्यो विशेषा गुणविशेषाः गुणेभ्यो व्यावृत्ता उत्क्षेपणादय इति यावत् । तथा ऽपि न द्रव्यं संगृह्यतइत्यत आह । आश्रय इति । तच्छब्दाध्याहाराद् गुणविशेषाश्रयो द्रव्यमित्यर्थः । प्रतिपदमिति । गुण इति च विशेष इति चाऽऽश्रय इति चेति पदानि । अथ वा गुणविशेषाणामाश्रय इति चेति पदानि । अथ वा गुणविशेषाणामाश्रय इति गुणा रूपादयः विशेषाः कर्माणि गुणेभ्य इत्यर्थात् । तेषामाश्रयश्चेति द्वन्द्व एव तेषामित्यर्थाद्गम्यते । तत्र मूर्च्छित इतिमूर्छनं संबन्ध इह चासौ समवाय इति ॥ ६६ ॥

आकृ-ख्या (सू. ६७) ॥ जातिश्च जातिलिङ्गानि च जातिलिङ्गानि तान्याख्यायन्ते यया सा आकृतिः । शिरःपाण्यादिव्यूह आकृतिर्जातिमनुष्यत्वादिकमाचष्टे । शिरोनासिकाललादीनां व्यूहो मनुष्यत्वजातिलिङ्गं शिर आचष्टे । शिरसा पादेन गामनुमिन्वन्तीति भाष्यम् । यद्यपि गोत्वं प्रत्यक्षमेव नाकृतिव्यङ्ग्यं तथा ऽपि विप्रतिपद्यमानं प्रत्युच्यते अनुमिन्वन्तीति न पुनः सर्वा जातिराकृत्या लिङ्ग्यतइति । मृत्सुवर्णरजतादिका हि रूपविशेषव्यङ्ग्या जातिर्नाकृतिव्यङ्ग्या ब्राह्मणत्वादिजातिस्तु योनिव्यङ्ग्या आज्यतैलादीनां जातिस्तु गन्धेन वा रसेन वा व्यज्यते । अत एव न सार्षपादीनां तैलत्वमस्ति तद्व्यञ्जकयोर्गन्धरसयोरभावात् । भाक्तस्तु तैलशब्दप्रयोगः क्षीरजातिरपि रसव्यङ्ग्यैव अत एवामिक्षायाः क्षीरत्वं न तु वाजिनस्य तद्व्यञ्जकस्य रसभेदस्य वाजिने ऽभावाद् आमिक्षायां च भावादिति ॥ ६७ ॥

समा-तिः (सू. ६८) ॥ प्रसूत इति प्रसवः समानबुद्धे-र्भिन्नेषु प्रसोत्री या जातिः सा ऽवश्यं समानप्रत्ययं प्रसूते न पुन र्या समानप्रत्ययं प्रसूते सा जातिः । पाचकादिषु व्यभिचारा-दिति । व्यक्त्याकृतिभ्यां भेदकत्वमात्रेण चैतल्लक्षणं न तु सर्व-था वेदितव्यम् । यस्तु वैयात्यात्प्रत्यक्षे ऽपि विप्रतिपद्यते तं प्र-त्यनुमानान्याह । गवादिष्वनुवृत्तप्रत्यय इति । (३३३।१८) व्यपदेश इति सम्बन्धिना सम्बन्धान्तरस्य विशेषणं पुरुषो व्य-पदिश्यते राज्ञ इत्यनेनेति । गोर्गोत्वानुवृत्तिप्रत्यया इति । पूर्वमनुवृत्तप्रत्ययमात्रं पक्षीकृतम् इह तु गोर्गोत्वानुवृत्तिप्रत्यय इत्यपौनरुक्त्यम् । कीर्तित इति । यथा लिङ्गं विवक्षितमन्त-रत्वात् । अन्यत्र यथालिङ्गं प्रत्यय इति । नपुंसकमनपुंसकेनेति नपुंसकत्वं नाशङ्कनीयमिति ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्याय-
वार्तिकतात्पर्यटीकायां द्वितीयाध्याय-
स्य द्वितीयमाह्निकम् ।

द्वितीयो ऽध्यायः समाप्तः ॥

२ अ० १ आ० ६९ सूत्राणि । २ आ० ३० सूत्राणि मिलित्वा १३७ सूत्राणि । १ आ० ९ प्रकरणानि० २ आ० ४ प्रकरणानि मिलित्वा १३ प्रकरणानि ।



अत्र भाष्यं परीक्षितानि प्रमाणानि प्रमेयमिदानीं परीक्ष्यतइति । वृत्तानुकीर्तनं प्रमेयपरीक्षां वर्तिष्यमाणां प्रति वृत्तायाः प्रमाणपरीक्षाया हेतुभावं दर्शयितुम् । प्रमाणेन हि प्रमेयं परीक्ष्यते नान्येन । न च तदपरीक्षितं प्रमेयपरीक्षायै प्रभवति । तस्मात्प्रमाणपरीक्षा हेतुः हेतुमती प्रमेयपरीक्षेति । द्वादशविधं प्रमेयं तत्कस्मात्प्रथमत आत्मैव परीक्ष्यते न प्रमेयान्तरमित्यत आह । तच्चात्मादीत्यात्मा विचार्यतइति । (३३८।८) आत्मैव हि प्रमेयेषु प्रथममुद्दिष्टो लक्षितश्चेति तदनुरोधादात्मैव प्रथमं परीक्ष्यते न प्रमेयान्तराणीति । अत्र च यद्यपि स्वरूपेणात्मन्येव परीक्षां प्रतिजानीते तथा ऽपि लक्षणपरीक्षाद्वारेण लक्ष्यपरीक्षणाल् लक्षणपरीक्षैव द्रष्टव्या । यथा चेयमात्मलक्षणपरीक्षा तथोपरिष्टाद्दर्शयिष्यते । तदेतद्वार्त्तिककारो व्याचष्टे । आनन्तर्यादिति । किं पुनः प्रयोजनं प्रमेयपरीक्षायाः न हि निष्प्रयोजनं परीक्षन्ते प्रेक्षावन्त इत्यत आह । यद्विषयो ऽहंकार इति । अहंकार इत्यात्मादिविषयं मिथ्याज्ञानं निर्दिशति । शरीराद्यभेदेनात्मदर्शनं खलु संसारं प्रवर्तयतीत्युक्तं द्वितीयसूत्रे । अनेन प्रमेयपरीक्षायाः प्रयोजनवत्त्वं दर्शितम् । अत्र भाष्यकारेण विचारपूर्वरूपः संशयो दर्शितः । किं देहेन्द्रियमनोबुद्धिसंघातमात्रमात्मेति । संशयकारणं चोक्तं व्यपदेशस्येति । यद्यपि वृक्षप्रासादयोरवयविसमुदाययोरन्ययोरेवावयवेन समुदायिना च व्यपदेशस्तथा ऽव्यवयव्यभावे समुदायं च समुदाय्यनतिरिक्तं मन्वानस्य परस्योदाहरणं द्रष्टव्यम् । तदेतद्वार्तिककार आक्षेप्तुं पृच्छति । किं पुनरस्येति । उत्तरं किं शरीरेति । आक्षिपति नेति । समानधर्मणो धर्मिणो दर्शनात्संशयो न पुनरदर्शनादित्यर्थः ।

समाधत्ते । नेच्छादिसूत्रेति । इच्छादयो हि कार्यत्वाल्लिङ्गमात्मन इति दर्शितम् । तान्येव तु लिङ्गानि दर्शयत्येषितारं परीक्षन्ते । किं देहेन्द्रियव्यतिरिक्त एषितैभ्यः सिध्यति आहो स्विदभिन्न इति युक्तो विचारः । अपि चायमात्मशब्दाभिधेयो धर्मी सर्वतन्त्रासिद्धः केवलमस्य शरीरेण सह भेदाभेदे वादिनां विवाद इत्याह । अविप्रतिपत्तेश्चेति । (३३६।१) ननु चात्मासत्त्वे परैः प्रमाणान्यजातत्वादीन्युपन्यस्तानि तत्र कथं न तत्सत्त्वे विमतिपत्तिरत आह । असत्त्वप्रतिपादकप्रमाणाभावाच्चेति । वाद्येवासौ न भवति यो धर्मिणि विप्रतिपद्यते न हि धर्मिणि विप्रतिपद्यमानस्यास्ति किंचित्प्रमाणं सर्वस्य तस्याश्रयासिद्धेरप्रमाणत्वात् । अभावस्य च भावाधीननिरूपणस्यासत्तासद्भावानिरूपणात् । तस्माद्धर्म्यभाववादी न लौकिको न परीक्षक इत्युन्मत्तवदुपेक्षणीयः । धर्म्यसिद्धिवादिनां प्रमाणमुपन्यस्यति । न नास्तीति । निराकरोति । तत्र नास्त्यात्मेति । यत्पुनरपरे समादधुः

अनादिवासनोद्भूतविकल्पपरिनिष्ठितः ।
शब्दार्थस्त्रिविधो धर्मी भावाभावोभयाश्रयः ॥

भावाश्रयो यथा नीलमिति अभावाश्रयो यथा शशविषाणमिति उभयाश्रयो यथा ऽमूर्तमिति । अमूर्तं हि भवति विज्ञानं भवति च शशविषाणम् ।

तस्मिन्बाह्यानुपादाने साध्ये ऽस्यानुपलम्भनम् ।
तथा हेतुर्न तस्यैवाभावः शब्दप्रयोगत इति ।

सो ऽयमात्मविकल्पो बाह्योपादानो न भवतीति । यथा नीलविकल्पो बाह्यनीलोपादानः नैवमात्मविकल्पो बाह्योपादानं इत्यर्थः ।

तत्रैवं भवान्प्रष्टव्यो जायते । किमात्मविकल्पस्य बाह्योपा-

दानत्वमात्रं प्रतिषिध्यते । किं बाह्यात्मोपादानत्वम् । पूर्वस्मिन् सिद्धसाधनं मा भूदात्मविकल्पो बाह्यनीलाद्युपादानः । किं नः छिन्नम् । उत्तरस्मिंस्तु कल्पे कार्यं बाह्यात्मा सिद्धः यदुपादानत्वं विकल्पस्य प्रतिषिध्यते । सिद्धश्चेत् क्वापि नास्यात्यन्ताय प्रतिषेधः । असिद्धश्चेत् कथमप्रतीतस्य निषेधः । प्रतीतो विकल्पे बाह्ये निषिध्यते चैत्र इव गेहे चत्वरतले निषिध्यतइति चेत् । एवमपि यत्र प्रतीतस्तत्र न निषिध्यते यथा भवद्भिरेवोक्तं न तस्यैवाभावः शब्दप्रयोगगत इति । बाह्यश्चात्मा विकल्पेन नोपदर्शित इति प्रसक्त्यभावान्न शक्यो निषेद्धुम् । अप्रदर्शितोऽप्यध्यवसित इति प्रसक्त एवेति चेत् । ननु विकल्पस्य को ऽयमध्यवसायो नाम । ग्रहणादतिरिक्तः ग्राह्यस्य स्वाकारस्य वा ऽऽलीकस्य वा बाह्याध्यारोप इति चेत् । न बाह्याऽविषया विकल्पा बाह्यमारोपयन्तीति चित्रम् । न हि आरोपविषयारोप्ये अजानन् आरोपयितुर्महतीत्यसकृदावेदितम् । अपि च अलीकं प्रतीयमानं यथा न निषेद्धुं शक्यं प्रतीयमानत्वादेवमस्य बाह्यत्वमपि । मिथ्यात्वात्प्रतिषिध्यतइति चेत् । तत्किमलीकमपि सत्त्वं यत्तदुल्लङ्घ्य बाह्यत्वं प्रतिषेद्धुमध्यवसितो ऽसि बाह्यभेदग्रहस्तदध्यवसायो न प्रमाणक इति न निषेधगोचरः । न च ज्ञानाकार आत्मा परमार्थसन् बाह्यत्वेनारोप्यमाणः प्रतिषिध्यत इति सांप्रतम् । विज्ञानमये हि सर्वथा बाह्यस्याग्रह तत्समारोपसंभवात् । अत्यन्तासतश्च बाह्यस्य विज्ञानात्मनो ग्रहे तथाविधेनासता विज्ञानात्मना विज्ञानग्राह्येण किमपराद्धं येन तद्ग्राह्यो न स्यादिति विज्ञाननयो दत्तजलाञ्जलिः प्रसज्येत । न चायमात्मा पूर्वापरकालावस्थायी क्षणिकविकल्पाकारो भवितुमर्हति येन तदाकारो बाह्यत्वेन प्रतिषिध्यते । तस्मादन्यत्र दृष्टमन्यत्र समारोप्य प्रतिषि-

ध्यतइति युक्तम् । स च समारोपः क चित्स्वकारणप्रभवः क चि-
त्प्रतिषिध्यते यथेन्द्रियादिदोषादुत्पन्नरजतज्ञानस्य शुक्तिकायां नेदं
रजतमिति । क्वचित्पुनराहार्यो यथा नेह चैत्रइति । तस्मादात्मनो
देशकालान्तरे वस्तुनि विकल्पनं विज्ञाने चासंभवादत्यन्तासतो
समारोपः तदभावादात्मन्येव नास्ति अस्ति चेत्कथमत्यन्ताय
निषेधः । तस्मादात्मा नास्तीति पदयोर्ऽर्थाघातः । यद्यप्यात्मा
नास्तीति पदानि तथा ऽपि नास्तीत्यैकपद्यं विवक्षित्वा पदे इति
द्विवचनोपपत्तिः । पद्यते गम्यते ऽनेनार्थ इति विवक्षित्वा पद-
समुदायो ऽपि पदमुच्यते । यद्यपि घटादीनां देशान्तरादौ नि-
षेधस्तथा ऽपि आत्मनोऽत्यन्ताय भविष्यति न हि प्रतिषेधा-
न्तरधर्ममवश्यं प्रतिषेधान्तरमनुबध्नातीत्यत आह । सर्वश्चाय-
मिति । उपपादितमेतदधस्ताद् यथा चाननुभूतमशक्यमारोप-
यितुमिति न क चिदात्मन्यन्याधारत्वमुक्तं स्वातन्त्र्यादात्मनः,
सामान्यादयस्तु पिण्डादिपरतन्त्रनिरूपणाः पिण्डाद्याधारा इति ।

पृच्छति । किमयमिति । (३३७।२) यत्र क चिदस्ति तदत्यन्त-
मसद् तथा चायं तस्मादत्यन्तमसन्निति भावः । उत्तरं न ना-
स्तीति । न तावन्न क चिदस्तीति वाक्यमात्मानं स्वरूपेण नि-
षेधति देशरूपाविशेषप्रतिषेधात् । शङ्किना आह । कथं वाक्यो-
युक्तिरिति । उत्तरवाद्याह । एषा वाक्योयुक्तिरिति । एषा
वक्ष्यमाणार्था । तदर्थमाह । यद्यथाभूतमिति । न हि पदार्था-
नां सत्ता देशबलेन व्याप्ता येन देशवत्त्वं निवर्त्तमानं तां निवर्त्त-
येदिति भावः । न च कालविशेषप्रतिषेधो ऽपीति । का-
लान्तरप्रतियोगी एकैकः कालः कालविशेषः तत्प्रतिषेधो ऽप्या-
त्मन्ययुक्तः न हि यथा घटादिष्ववच्छेदार्थः कालः तथा नित्य-
आत्मनि । प्रध्वंसाभाववान् घटः खल्वासीन्न तथा ऽऽत्मा

प्रागभाववान् घटो भविष्यति न तथा आत्मा । अतीतप्रागभावो ऽनागतप्रध्वंसः घटो वर्तमानो न च तथा आत्मा तस्मान्नास्यावच्छेदार्थेन त्रैकाल्यमुपावर्तते । अतीतानागतव्यपवृक्तवर्तमानक्रियाव्यङ्ग्यः कालो ऽस्ति सदा नित्यानां यतो ऽस्त्यात्मा विद्यते व्योमेति तस्मादवच्छेदकत्रैकाल्याप्राप्तेः न त्रैकाल्यप्रतिषेधः । अतीतानागतव्यपवृक्तक्रियाव्यङ्ग्यस्य च वर्तमानस्याशक्यनिषेधत्वाद् नात्मनि कालप्रतिषेध इति स्थितम् । आत्मप्रतिषेधं चेति । आत्मेति हि पदं लोकसिद्धं पद्यते ह्यनेन कश्चिदर्थः येन न कश्चिदर्थः पद्यते तदपार्थकं भवितुमर्हति । किमसतः सता साधर्म्यमिति । तर्हि भवतां सिद्धान्ते सर्वोपाख्यारहितमसत्प्रमेयमपीति भावः । अथ शरीरादेरात्मत्वं कल्पितं निषिध्यते शरीरादयो नात्मान इति तत्राह । आत्मसामान्यं चेति । अथ शरीरादीति । अहंकारस्तावत्परमार्थतः शरीरादिविषयः स्थूलो ऽहं गौरो ऽहमिति प्रत्ययात् । तमिममात्मेति कल्पयित्वा विपर्यस्यति तदनुरूपं व्यपदिशति व्यवहरति च । सो ऽयं विपर्ययः प्रतिषिध्यते नास्त्यात्मेति । निराकरोति । एवं शरीरादीति । ( ३३८ । १ ) न ह्यहंकारसमारोपविषयसत्त्वमनभ्युपगच्छतः समारोप उपपद्यते तस्मात्तत्प्रतिषेधतो व्याघात इत्यर्थः । चतुर्णामुपादानरूपत्वात् तमस इति । रूपरसगन्धस्पर्शाश्चत्वारो घटादिरूपेण परिणतास्तेषामुपादानरूपं नभ इति उपादीयतइत्युपादानम् । उपादेयरूपत्वादिति क्वचित्पाठः स तु सुगमः । सोऽयं वात्सीपुत्राणां वैभाषिकाणां सिद्धान्तः तेन विरोध इत्यर्थः । सुगममन्यत् । अथायं भावप्रतिषेध इति । ( ३३९ । १६ ) न जन्ममात्रप्रतिषेधो ऽपि तु आत्मनो भावः सत्ता प्रतिषिध्यत इत्यर्थः । स्वतन्त्रस्य धर्मस्य समवायादन्यस्यादर्शनादिति । नि-

कायो देवमनुष्यतिर्यगादीनामनौत्तराधर्येणावस्थितः संघातः त-द्विशिष्टाभिरित्यर्थः। कार्यं कारणं वेति। ( ३४० । १५ ) यदि विषाणमवयवस्तदा कारणं यदि तु केशनखादितुल्यत्वेना-नारम्भकत्वान्नावयवस्तदा कार्यं तस्मात्तत्प्रभवतीति। उक्तमप्य-र्थं पुनर्विकल्पयन् पर्यनुयोगार्थमाह। इदं शशविषाणं ना-स्तीति ब्रुवाण इति। सामान्यप्रतिषेधो विषाणसम्बन्धमात्रप्र-तिषेध इति। विशेषप्रतिषेधः कार्यकारणभावलक्षणसम्बन्धप्रति-षेध इति। विषयस्वभावभेदानुविधायीति। अहमिति विज्ञानं मानसं विषयस्यात्मनो यः स्वभावभेदः कर्तृत्वभोक्तृ-लक्षणो जाने ऽहं भुञ्ज इत्यादिस्तदनुविधायि। एतदुक्तं भवति न केवलमात्मस्वरूपमात्मज्ञानस्य विषयस्तथा सति परसमवेतक्रि-याफलशालित्वाभावेनात्मनः कर्मत्वाभावेनाकर्मतया तद्व्यापयज्ञा-नस्यापि निवृत्तिप्रसङ्गात्। यदा तु धर्मवदात्मविषयं ज्ञानं भव-ति तदा धर्माणां परसमवेतक्रियाफलशालितया तद्व्याप्तस्य ज्ञा-नस्यापि निवृत्तिरिति। जानातिश्चात्मधर्मकर्मा आत्मानमपि गोचरयतीति सूक्तं विषयस्वभावभेदानुविधायीति। अहंकारा-लम्बनेति। ( ३४१ । १६ ) आलम्ब्यते अनेनेत्यालम्बनं ज्ञा-नमहंकारेण च विषयिणा विषयमुपलयति। देशयति। ननु भव-त्यहं गौर इति। परिहरति न भवतीति ब्रूम इति। न व्य-पदेशमात्रं देहाद्व्यतिरिक्तात्मसद्भावसाधनमस्माभिरुक्तं येना-नैकान्तिकं भवेत्। अपि त्वनुभवः। स च न शरीरादिष्विदमो विषयेष्वस्ति। अपि त्वसंभिन्नेदंविषयो ऽहंप्रत्ययः शरीरा-दयस्तु मतुब्लोपादभेदोपचाराद्वा ऽहमा विषयीक्रियन्ते। ममा-त्मेति तु व्यपदेशमात्रं न पुनः शरीरादिष्विव मकारस्तत्र मु-ख्यो भेदनाप्रतिभासनात्। राहोः शिर इतिवत्तु ममकार आत्म-

नि द्रष्टव्यः । अत एवाह । ममप्रत्ययेति । (३४२।२) न पुन-र्ममकारमात्रं तस्मात्सर्वं रमणीयम् । विरुद्धा प्रतिपत्तिर्विप्रतिपत्ति-र्बाधितेति यावत् । कः साधनार्थ इति । कः साधनशब्दस्यार्थः । अथानुपलब्धिरपि नास्तीति । भावरूपो धर्मो ऽसति विरु-ध्यते नासद्रूप उभयोः समानशीलत्वादित्यर्थः । निराकरोति । कः साधनार्थो ऽनुपलब्धेरिति । असत्यास्तुच्छाया अनुपलब्धेः कः साधनत्वरूपो ऽर्थ इत्यर्थः । शङ्कते । अथ कल्पितस्येति । ( ३४३ । नापलब्धिस्तुच्छा किं तु तत्त्वान्तरं सत् सा तु क-ल्पिताश्रयतया नाश्रयासिद्धेत्यर्थः । एतद्विकल्प्य निराकरोति । कथं काल्पितस्येति । न हि तात्त्विक्यनुपलब्धिः परमार्थसदा-श्रया कल्पितसत्त्वस्य धर्मिणो धर्मो भवितुमर्हतीत्यर्थः । द्वितीयं कल्पमाशङ्कते । अथासत्त्वेनेति । निराकरोति । सिध्यत्य-नुपलब्धिरिति । असत्त्वेन कल्पितस्य पारमार्थिकं सत्त्वमनु-मन्तव्यम् । असत्यसत्त्वकल्पनाया अयोगात् तथा च भावाश्र-यानुपलब्धिस्तात्त्विकी सिध्यत्येव । यदर्थं त्वसौ तदेव पार-मार्थिकमसत्त्वमात्मनो न सिध्यति असत्त्वस्य काल्पनिकत्वाभ्यु-पगमाद्भवद्भिरित्यर्थः । अपि चायमसत्वेन सन्तमात्मानं कल्पयि-त्वा ऽत्यन्तासत्त्वमनुपलब्धेरस्य साधयितुमध्यवसितः । तच्चास्य सधर्मेणानुपलब्ध्या न सिध्यति । न जातु स्थाणुधर्मेण कल्पितेन पुरुषे स्थाणुत्वं पारमार्थिकं शक्यं साधयितुमित्याह । किमर्थं चायमात्मेति । रूपादिशब्देभ्यो ऽन्यत्वे सतीति । यदि हि पदत्वादित्युच्यते रूपादिशब्दैरनैकान्तिकं स्यादत उक्तम् । रूपादिशब्देभ्यो ऽन्यत्वे सतीति । यद्येकपदत्वादित्युच्येत रूपादि-शब्दैरनैकान्तिकं स्यादत उक्तं रूपादिशब्देभ्यो ऽन्यत्वेसतीति । त-था ऽपि रूपविज्ञानवेदनासंज्ञासंस्कारा इत्ययं शब्दो रूपादिषा-

चको यः शब्दो रूपं वेदना संज्ञा विज्ञानमित्यादिस्ततो ऽन्यो ऽसमस्तादन्यः समस्त इति तेनानैकान्तिकत्वमत उक्तमेकेति। तेन रूपादिवाचकपदव्यतिरिक्तं यदेकपदं तद्रूपादिव्यतिरिक्तस्य वाचकं यथा घटादिपदं तथा चात्मपदं तस्मात्तदपि तथेति। एतेनेति। आत्मशब्दसाध्यत्वेनैवासंभिन्नेदंप्रत्ययो ऽहंप्रत्ययो व्याख्यातः। शङ्कते असिद्धइति। घट इति रूपादय एवैकोदकाहरणावच्छिन्ना उच्यन्ते। न तु रूपाद्यतिरिक्तो घटो नाम कश्चिदस्तीत्यर्थः। निराकरोति। अत्रोक्तमिति। उपादेयरूपत्वात्तमस इति। यथा दायइति देयमुच्यते एवमुपादायेत्यनेनोपादेयमिति। सविषयत्वं सद्विषयत्वं सिद्धान्तिनोक्तमिति मन्वानश्चोदयति तमः शब्दस्य सविषयत्व इति। यद्यपि प्यभावविषयत्वे ऽपि न निर्विषयत्वं तथा ऽपि देशकाभिमानमनुविदधानः परिहरति न सूत्रार्थे पुनर्दृष्टान्तो नास्तीति। (३४४।१०) पूर्वमात्मानुपकारकत्वे साध्ये दृष्टान्ताभाव उक्तः पुनरिहोच्यइत्यर्थः। देशयति। अथात्मशब्द इति। यो यो वर्णात्मकः ससर्वो ऽनित्यविषयो यथा घटादिशब्दः तथा चानित्यत्वे सति तद्विज्ञानमेव स्यान्नात्मेति फलत आत्मप्रतिषेध इत्यर्थः। एतदपि दूषयति। तथाऽपीति। नित्यशब्दस्तावन्नित्यमाचष्टे अन्यथा न तत्प्रतिषेध इत्यर्थः। शङ्कते अथेति। सिद्धसाधननिवृत्त्यर्थं शरीरादिव्यतिरिक्तविषय इति। निराकरोति तथाऽपीति। रूपादिस्कन्धपञ्चकातिरिक्तं नास्तीति भवतां राद्धान्तस्तदतिरिक्ताभ्युपगमेन विरुध्यतइत्यर्थः। यदि विवक्षितार्थव्यतिरेकेणेति। (३४५।८) वादिनो हि शरीरेन्द्रियबुद्धिवेदनासंघातस्य पारार्थ्यं विवक्षितं परार्थाश्चक्षुरादय इति ब्रुवतो न संघातपरार्थत्वं तच्चेह पक्षधर्मताबलात्सिध्यदस्याभि-

प्रायेण व्याप्यते न तु साक्षाद्विवक्षितं तद्वदिहाभिप्रायव्याप्तं वि-वक्षितमारोप्य यद्यन्वयविरोधौ दृश्येते ततः सर्वानुमानोच्छेदः एतच्चेश्वरसिद्धौ निपुणतरमुपपादयिष्यते । अथानुमानेन बा-ध्यत-इति । संघातत्वानुमानमेवाभिप्रेतविपरीतसंघातपरार्थत्व-पक्षो व्यवस्थालक्षणानिष्टप्रसङ्गरूपतर्कसहायमस्य बाधकं प्राणा-दिसत्त्वानुमानं वेति । एकदेशेन च एकदेशान्तराणामि-ति ब्रुवतो वार्तिककारस्य गृहप्रासादादयो नावयविनो विजा-तीयानामनारम्भकत्वादित्यभिमतम् । अकार्यकारणभूतानां चेति । (३४७।१९) यथा हि कालाक्षीं गामीक्षितवतः स्वस्ति-मत्यां गवि भवति प्रतिसंधानं न चैतयोरस्ति कार्यकारणभाव इत्यर्थः । स्वं चैतन्यं त्वात्मनः स्वातन्त्र्ये सत्यव्यवस्थानाच् चक्षुरादिवदिति हेतुः प्रमाणसंशयविपर्ययस्मृतिषु यो ऽनुस्यूत एक उपलभ्यते स चेतनः स्वातन्त्र्ये सत्यव्यवस्थानात् । य-स्त्वचेतनो नासौ स्वातन्त्र्ये सत्यवस्थितो यथा चक्षुरादिरिति व्य-तिरकी हेतुः । यद्यव्यवस्थानादित्येतावन्मात्रमुच्येत ततो मन-सा ऽनैकान्तिकं स्यादत उक्तं स्वातन्त्र्ये सतीति । अथ वा कृतमव्यवस्थानेन स्वातन्त्र्यमेव केवलमस्तु चैतन्यसाधनमित्या-ह । नाचेतन आत्मेति । प्रमाणसंशयविपर्ययस्मृतिष्वनुस्यूत-मनुभूतम् उपलक्षयति । निराकृतमप्यर्थं प्रकारान्तरेण पुनरुप-न्यस्य निराकरोति । पृथिव्यादिनित्यत्वसाधनइति । भा-ष्यं भिन्ननिमित्ताविति । भिन्नमिन्द्रियं निमित्तं ययोः, अन-न्यकर्तृकौ-आत्मैककर्तृकौ, समानविषयौ-दृष्टमेकं विषय इ-त्यर्थः ॥ १ ॥

पूर्वपक्षसूत्रम् --

न वि-तू ( सू. २ )॥ यद्भावाभावानुविधायिनौ ज्ञान-

भावाभावौ तच्चेतनम् । इन्द्रियभावाभावानुविधायिनौ ताविति तदेव चेतनमिति भावः । सिद्धान्तभाष्यं संदिग्धत्वादहेतुः अनन्यथासिद्धावन्वयव्यतिरेकौ कारणत्वमात्रे प्रमाणं न तु कर्ता न चेतनश्चेतनं करणमित्यत्रेत्यर्थः ॥ २ ॥

विषयव्यवस्थानं च विरुद्धमिन्द्रियादीनामचैतन्यस्य साधनादित्याह । यच्चोक्तमिति ।

तद्य-धः ( सू० ३ )॥ सर्वज्ञ इत्यस्य विवरणं सर्वविषयग्राही सर्वेषामिन्द्रियाणां च ये विषयास्तद्ग्राही इन्द्रियान्तराणि प्रमाणान्तराणि च पुनर्व्यवस्थितविषयाणि तेनार्वागपि सर्वज्ञ इति सिद्धम् । तत्रेदमभिज्ञानमिति । असाधारणं चिन्हमभिज्ञानमुच्यते तच्चाप्रत्याख्येयमनुभवसिद्धत्वात् । चेतनवृत्तमभिज्ञानमप्रत्याख्येयमुदाह्रियत इति योजना । अनियतपर्यायमनियतक्रममित्यर्थः । अनेकविषयमर्थजातमिति । अनेकपदार्थो विषयो यस्यार्थजातस्य तत्तथोक्तम् । क्वचित्पाठो ऽनेकविषयमर्थजातमिति स सुगम एव । आकृतिमात्रं त्विति । सामान्यमात्रमित्यर्थः । तदेतच्चेतनवृत्तं देहादिभ्यो व्यावर्तमानं तदतिरिक्तं चेतनं साधयतीति स्थितं नेच्छाद्याधारत्वं देहादीनामिति ॥ ३ ॥

सूत्रान्तरमवतारयति भाष्यकारः इतश्च देहादिव्यतिरिक्त आत्मा न देहादिसंघातमात्रमिति ।

शरीर-वात् ( सू० ४ )॥ प्राणातिपाते पातकाभावप्रसङ्गादिति। अयं यद्यपि भूतचैतनिकानां नानिष्टप्रसङ्गस्तथा ऽपि शाक्यान्प्रति द्रष्टव्यः ते हि प्राणातिपातकृतं पातकमिच्छन्ति । एवं च न बुद्धिरात्मेति वक्तव्ये देहादिग्रहणं विचित्राभिसंधित्वात्पुंसां, यदि कश्चिद्भूतचैतनिकः प्राणातिपातकृतं पातकं ने-

च्छेत्तं प्रति दूषणं भवत्येवमर्थमिति मन्तव्यम् ।

वार्तिकम् । अकृतकृताभ्यागमनाशदोष इति । (३५०।१७) येनाकृतं कर्म प्राणातिपातः तस्य पातकाभ्यागमो येन च कृतं तस्य नाश इत्यर्थः । शास्त्रचोदितं फलमनुष्ठातरीत्ययमुत्सर्गो यत्र पुनः शास्त्रमन्यस्य फलमाह यथा श्राद्धे वैश्वानरीयेष्ट्यादौ तत्र भवतु पुत्रकृतस्य श्राद्धस्य पितृगामि फलं पितृकृताया वा जातेष्टेः पुत्रगामि फलमिति । भावना स्मृतिहेतुः संस्कारः । यत्कायेति । (३५१।२) येन कायेनोपलक्षितः कश्चिच्चित्सन्तानःस कायान्तरवर्त्यपि फलं भुङ्क्तइत्यर्थः । एकनिमित्तानां प्रत्ययानां प्रतिसंधानादिति । उक्तमेतद् यथा नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसंधानमिति । सर्वावस्थोपलब्धेरिति । (३५२।७) सर्वावस्थासु बीजावयवानामुपलब्धेः परमाण्ववस्थत्वे त्वनुपलम्भः स्यात् । तस्मान्न बीजावयवाः पच्यमाना अङ्कुरोत्पत्तौ परमाण्ववस्था भवन्ति । अपि त्ववयविन एव पच्यन्तइत्यर्थः । परमाण्ववस्था बीजावयवा न बीजत्वादिजातिविशेषवन्तमारब्धुमर्हन्तीत्युक्तं सिद्धान्तिनेति मत्वा दर्शयति । यदि तर्हीति । परिहरति नानेनैवोक्तोत्तरत्वादिति । प्रतिसंधानाय बीजत्वजातीयानवयवान् लक्षितुमस्माभिर्बीजावयवानां परमाण्वन्तो विभागो निषिद्धः कल्पादौ त्वारम्भे परमाणूनां न प्रतिसंधानमस्ति न हि पूर्वसर्गे ये बीजमारभिरे सांप्रतमपि तएवारभन्ते नान्यइति प्रतिसन्धाननियमः अपि त्वन्येभ्यो ऽपि भवन्तीति भावः । पैलुकण्ठःशङ्कते । आमध्यात्पाकानुपपत्तिरिति चेत् । परिहरति नाप्रतिबन्धादिति । सान्तराण्येवावयविद्रव्याणीत्यर्थः । अथायमवयवानुप्रवेशो द्रव्यस्य विनाशकः कस्मान्न भवतीत्यत आह । यदि चायमवयवानु-

प्रवेश इति। ( ३८३। ६ ) भाजनगतानामपां भाजनविनाशे ऽवस्थानमेव न स्यात्। सान्तरत्वे तु तावत्य एवापो भाजने स्पन्दन्ते यावतीभिर्बहिः शीतस्पर्शोपलब्धिर्भवति मात्रया च तत्र कालपरिपाकवशादनवस्थानमपि विनाशे तु सहसानवस्थानमपां भाजनगतानां भवेदित्यर्थः। व्यवहिते द्रव्ये स्फटिकभाजने न तुल्योपलब्धिरिति शङ्कते। सुखी स्यामिति तत्क्रियेति चेत्। यद्यपि विशरारवः स्कन्धास्तथा ऽप्यनाद्यविद्यावासनावशो ऽयमेकमहंकारास्पदं सत्त्व मित्यभिमन्यमानः सुखी भवेयं दुःखी मा भूवमिति तृष्णक् प्रवर्त्ततइत्यर्थः। निराकरोति तन्नाननुभूतत्वादिति। यथा च क्षणिकानां विज्ञानानां परस्परवार्त्तानभिज्ञतया न प्रतिसंधानक्षमत्वं तथोपपादितमस्माभिरात्मलक्षणावसरइति। नानागतानामनुत्पत्तेः सत्त्वादिति ( ३८४। १७ ) न च ब्रह्मचर्यादिपरिपाकसहितेन ज्ञानक्षणेनासमर्थो ज्ञानक्षणो जन्यते स च न ज्ञानान्तरं प्रसूतइत्यनागतानुत्पत्तिरसमर्थस्य च क्षणस्य स्वभावतो विनाश इति युक्तम्। असमर्थक्षणोत्पादस्यैव सहकारिसापेक्षत्वानपेक्षत्वानुपपत्तेः। यथा चैतत्तथा क्षणभङ्गभङ्गावसरे उपपादयिष्यते ॥ ४ ॥

तद त् ( सू ५ ) ॥ वैनाशिको नैयायिकपक्षवत्सांख्यपक्षे ऽपि हिंसातत्फलानुपपत्तिमापादयितुं हिंसां तत्फलसंभवं पूर्वपक्षयति। इयं तु हिंसेति ( ३८५७ ) व्यक्तिरिति। सदेव कार्यं कारणेन व्यज्यते न त्वसत् क्रियतइत्यर्थः। परिहरति नेति। त्रिविधोऽप्ययं धर्मलक्षणावस्थापरिणामो नित्यात् धर्मिणो न भिद्यते इति परिणामानित्यत्वं धर्मिनित्यत्वेन विरुध्यते। अविरोधाय वा धर्मिणोऽनित्यत्वाभ्युपगमे वैनाशिकपक्षोक्तदोष-

प्रसङ्ग इत्यर्थः । गुण इति । ऋजुत्ववक्रत्वे खलु गुणौ प्रचयसंयोगविभागविशेषौ सत्येव द्रव्यारम्भकसंयोगे उदयव्ययवन्तावनुभूयेते इति । तदेतद् नैयायिकपक्षदूषणं सांख्यपक्षेऽप्यापाद्य नैयायिकं पृच्छति अथात्मनो नित्यस्येति । ( ३५६ । १० ) नैयायिक आह । सुख दुःखे इति । नित्यादात्मनो व्यतिरिक्ताभ्यां पुण्यपापाभ्यामात्मधर्माभ्यामनित्याभ्यामात्मधर्मावेव सुखदुःखे जन्येते इत्यर्थः । एतदुक्तं भवति । नित्यस्यानित्यधर्माधानमेवोपकारो न तु नित्यस्वरूपकरणं येन तदानित्यं स्यात् । धर्मश्च धर्मिणो भिन्नो न तु धर्मिस्वभावः । यथा च भेदाविशेषे सत्यपि वह्निधूमयोरेव कार्यकारणभावो न वह्निक्रमेलकयोर्वस्तुस्वभावनियमात् । एवं भेदाविशेषेऽपि आत्मनः पुण्यपापयोरेव धर्मधर्मिभावो नात्माकाशयोः पुण्याकाशयोर्वेति लेशमात्रमन्नोक्तं विस्तरस्तु क्षणभङ्गभङ्गे भविष्यतीति । नानेकान्तादिति । वाद्यभिमतपरमाणुनित्यत्वग्राहिप्रमाणदार्ढ्येनानैकान्तिकत्वमुक्तं न तु बौद्धराद्धान्ते नित्यः परमाणुरिति । अत एवापरितोषेणान्यथासिद्धिमाह । चर्मणश्चानित्यत्वमिति । तद्वतां चोपलादीनामवस्थानादिति । नासति विनाशप्रत्यये विनाशेऽस्ति किं चित्प्रमाणम् । उपलादिषु चावयवविभागविनाशाभ्यां प्राग् न विनाशोऽनुभूयते क्षणभङ्गभङ्गश्च निषेत्स्यतइति भावः । आरब्धकार्याणां द्रव्यान्तरानारम्भिका इति । ( ३५७ । १५ ) अवयव्यारम्भकात्संयोगाद्भेद उक्तः । विक्रियायां च दृष्टान्ताभाव इति । धर्मोत्पादमन्तरेणाविनश्यतो धर्मोत्पादमन्तरेणाविनश्यतो धर्मिस्वरूपस्य विक्रियायामित्यर्थः । शङ्कते यद्येवमिति । यद्येवंभूतो विकारः यादृशो घटादीनां श्यामतानिवृत्तौ लोहितोत्पादे विकारस्तादृशो नात्मन इति यदि शङ्कत-

इत्यर्थः। निराकरोति। आत्मन्यपीति। न बाह्येन्द्रियग्राह्य एव विकारो ऽपि तु धर्मान्तरोत्पादमात्रं तच्चात्मन्यप्यस्तीति॥५॥

न का-त् ( सू. ६ )॥ वैकल्यं वा प्रमापणं वेति। ( ३५८। ८ ) यथा शरीरमुपघ्नन् हिनस्त्येवं चक्षुराद्युत्पाटयन् हिनस्त्येवेति। पृच्छति कुत एतदिति। स्वरूपतो हिंसासम्भवे भाक्ती हिंसा न युक्तेति वैनाशिकस्याभिसन्धिः। उत्तरं हिंसाफलोपभोगस्येति। वैनाशिकस्यापि विशरारूणां भावानां न स्वरूपहिंसा कारणजन्येति विलक्षणोत्पादो हिंसेति वक्तव्यं तत्र कारणव्यापारसम्भवात् तथा च तत्रापि हिंसा भाक्तीति भाक्तत्वस्योभयत्राप्यविशेषाद् यस्मिन्पक्षे कृतहानमकृताभ्यागमदोषो नास्ति स पक्षो ऽभ्युपेतव्यः। स च नित्यत्वपक्षः तस्मात्पारिशेष्यात्तत्सिद्धिरिति। ज्ञानचिकीर्षाप्रयत्नानां समवायः कर्तृत्वमिति। ( ३५९। ३ ) उपायतद्व्यापाराणामनभिज्ञो हि चिकीर्षन्नपि न कर्ता एवमभिज्ञो ऽप्यचिकीर्षन् तथा चिकीर्षन्नप्यलसतया अप्रयतमानो न कर्त्तेति। सुखःदुखसंवित्समवाय इति। स्वसुखःदुखेति द्रष्टव्यम्। अस्ति हि परकीयसुखदुःखसाक्षात्कारो योगिनां न चैते भोगिनः॥ ६॥

इतश्च देहादिव्यतिरिक्त आत्मा कुतः।

सव्य-त् ( सू. ७ )॥ तत्र मानसमनुव्यवसायलक्षणं प्रत्यभिज्ञानं भाष्यकारो दर्शयति। तमेवैतर्हीति। व्यवसायं बाह्येन्द्रियजं प्रत्यभिज्ञानमाह। स एवायमर्थ इति। अस्यैव चानुव्यवसायः पूर्वः॥ ७॥

तदेतच्चक्षुरैक्येनाक्षिपति।

नैक-त् ( सू. ८ )॥

समाधत्ते ।

एक-त्वम् ( सू. ९ )॥ विनाशाविनाशलक्षणविरुद्धधर्माध्यासान्नानात्वमित्यर्थः ॥ ९ ॥

आक्षेप्ता ऽऽह ।

अव तुः ( सू. १० )॥

समाधाता आह ।

दृष्टा-धः ( सू. ११ )॥

तृतीयं व्याख्यानमाह ।

अथ वा एकविनाशस्यानियमादिति । एकत्वे चक्षुषो विनाशानियमो न स्यात् । सव्यस्यैव चक्षुषो न दक्षिणस्येति । एकत्वात्सव्यविनाशे दक्षिणस्यापि नाशप्रसङ्गात् । दृश्यते चायं नियमः । तस्माद् द्वावर्थौ पृथगावरणौ पृथगुपघातौ चेति । अपि च यदि चक्षुरेकं सव्येन नासावंशेनावपीडितं ततोङ्गुल्या ऽवपीडितं यथैकं भिन्नाभिवावभासयति । अवपीडनेनिवर्तमाने भिन्नावभासौ तावर्थौ संदधातीति । तथा नासावंशावपीडितं भिन्नमिव दर्शयेत् तन्निवृत्तौ सन्दध्यादित्येत्याह । अवपीडनाच्चैकस्य चक्षुष इति । रश्मिभेदाद्विषयसन्निकर्षस्य भेद इत्यर्थः । अङ्गुल्यवपीडितेन चक्षुषा दृष्टान्तेन विरोधादित्यर्थः । एकविनाशेनेतरविनाशो वा दृष्टान्तः । तेन विरोधादिति । स खलु दृश्यमानश्चैकान्तावधारणादतश्चेति दृष्टान्त इति सूत्रार्थः ।

तदेतत्प्रकरणं वार्त्तिककारो दूषयति । सिद्धत्वादनारम्भ इति। युक्तोऽन्यः समुच्चयः शास्त्रे । अयमभिसन्धिः । काणस्तथा न पश्यति पिहितैकलोचनो वा यथा ऽविकलेन्द्रियः । तत्र यदि सव्यदक्षिणाधिष्ठानभेदभिन्नं चक्षुर्न्न चैतद् द्वयमणुना मनसा

युगपदधिष्ठातुं शक्यमित्यन्यतरदधिष्ठेयम् । तथा च सर्व एवैकैकेन चक्षुषा पश्यतीति पिहितैकलोचनेनातुल्योपलम्भः अविकलाक्षस्य स्यात् । न चैवमस्ति एकत्वे तु तदुभाभ्यामधिष्ठानाभ्यां विनिर्यत्क चिदपि मनसा ऽधिष्ठितमेवेत्यविकलाक्षस्य न विकलाक्षवदुपलम्भप्रसङ्गः । तस्मादेकमनेकाधिष्ठानं चक्षुरिति । प्रकरणाविरोधश्चेन्द्रियपञ्चत्वादिति (३६०) । न चैतदेकस्मिन् शरीरे जात्यभिप्रायं प्राणादीनां व्यक्तीनां चतसृणां व्यक्त्यन्तरेण समभिव्याहारोपपत्तेर्न तु जात्या न हि भवति ब्राह्मणयुधिष्ठिरावागताविति किं तु ब्राह्मणराजन्याविति वा वशिष्ठयुधिष्ठिराविति वा । विनष्टे ऽप्येकस्मिन्नधिष्ठाने योऽविनष्टो ऽवशिष्यते तेन प्रत्ययमात्रं कारणस्यैव भवति । न च नासावंशावपीडितेन सर्वेषां सर्वदा सर्वत्र द्विचन्द्रवद्विभ्रमप्रसङ्गः । आगन्तुकमवपीडनं भ्रमहेतुर्नौत्पत्तिकमिति कार्यदर्शनात्कल्प्यते॥११॥

तदेवं प्रतिसन्धानद्वारेणात्मनि प्रत्यक्षं प्रमाणयित्वा अनुमानमिदानीं प्रमाणयति । अनुमीयते चायमिति । (३६१ । १६) विप्रतिपन्नं हि प्रति यातिसन्धानमुक्तं परमार्थतस्तु अनुभवानुसारमार्गो ऽयमिति मन्तव्यम् ॥

इन्द्रि-त् ( सू. १२ ) ॥ कस्य चिदम्लचिरबिल्वादेरनुभूतस्य तेन सहचरितं रूपं वा गन्धं वा ऽनुभवति । अथ तत्सहचरितं रसमनुस्मरति स्मृत्वा चेच्छति इच्छातो रसनेन्द्रियविकारो दन्तोदकसंप्लवलक्षणः प्रवर्तते तद्दर्शनाच्चास्येच्छानुमीयते इच्छया च स्मृतिः सेयं स्मृतिरसत्यात्मनि सर्वेन्द्रियविषयवेदिनि न भवितुमर्हतीति ॥ १२ ॥

अस्याक्षेपसूत्रम् ।

न स्मृ-त् ( सू. १३ ) ॥ स्मृतिरात्मानं कारणत्वेनावग-

मयेत् विषयत्वेन वा । न तावत्कारणत्वेन तस्याः संस्कारकारणत्वात् । न विषयत्वेन स्मर्तव्यविषयत्वात् । स्मृताच्च तस्मादिन्द्रियान्तरविकारोत्पत्तिरित्यर्थः ॥ १३ ॥

समाधत्ते ।

तदा–धः ( सू. १४ ) ॥ असत्यात्मनि स्मृत्यनुत्पत्तिं दर्शयित्वा स्मर्तव्यार्थविषयैव स्मृतिर्नात्मविषयेति पूर्वपक्षिणोऽवधारणं खण्डयति ।

अपरिसंख्यानाच्च स्मृतिविषयस्येति (सू. १५) ॥ मानसानुव्यवसायजनितसंस्कारकारणासु चतसृष्वपि स्मृतिषु नार्थमात्रं विषयोऽपि तु ज्ञानज्ञातृज्ञेयानि सर्वत्र विषयाः चतुर्षु वाक्येषु एकत्र ज्ञानं क्रिया कारकान्निष्कृष्टा यथा अमुष्मिन् मम ज्ञानमभूदिति अगृह्यमाणोऽप्यर्थः स्मृतिसन्निधापनादमुष्मिन्नित्युच्यते कारकादनिष्कृष्टाप्येकत्र पूर्वापरीभूतभावनाप्रधाना ज्ञानक्रिया गम्यते अज्ञासिषमहममुमर्थमिति । अन्यत्र तु ज्ञानभावने कारकादनिष्कृष्टे कर्तृप्रधाने यथा ज्ञातवानहममुमर्थमिति । अन्यत्र ज्ञानभावने कारकादनिष्कृष्टे कर्मप्रधाने यथा ऽसावर्थो मया ज्ञात इति। समानार्थमिति। ज्ञानज्ञेयज्ञातृप्रकाशनं समानमित्यर्थः। एवं तावदगृह्यमाणे ऽर्थे स्मृतिः प्रदर्शिता। अथ प्रत्यक्षे ऽर्थे स्मृतिः प्रदर्श्यते। अथ प्रत्यक्षे ऽर्थे इति । स्मृतिरिति प्रत्यभिज्ञानमाह स्मृतिच्छायावाहित्वात् । अद्राक्षमिति। पूर्वार्थमर्थदर्शनं परामृषति तेनार्थदर्शनानुभवः कल्प्यतामनुभवकल्पना तु कुतस्त्येत्यत आह । न खल्वसंविदिते स्वे दर्शने इति। अपि त्वर्थदर्शनं तद्दर्शनं च संविदिते एवेत्यर्थः। कुत एतदित्यत आह । एतदद्राक्षमिति । यस्मादनुभवपुरस्सरं यदत्राद्राक्षमिति भवति नूनं तत्रानुभवप्रथा ऽप्यभूदिति

कल्पनीयमित्यर्थः। इतो ऽपि न शरीरगुणः स्मृतिः बाल्ये अनुभूतस्य वार्धके स्मरणात्। अन्यद्धि बालशरीरमन्यच्च वृद्धशरीरमिति। आस्तां तावत्प्रत्यभिज्ञानं, सादृश्यमपि दुर्विज्ञानम्। न च परमाणूनां चैतन्यं, ते हि प्रत्येकं वा चेतयेरन् मिलिता वा। पूर्वस्मिन् कल्पे अनेकचैतन्ये एकस्मिन् शरीरे नैकमित्यनियमो भवेत्। न हि नानाचेतनानामैकमत्यनियमो दृष्टः मिलितानां तु चैतन्ये परमाणूनामावापोद्वापभेदेन मेलकस्य नानात्वात्स एवान्योपलब्धस्यान्येन स्मृत्यभावप्रसङ्गः। तस्मान्न शरीराधारा चेतनेति।

परेषां कारिकां दूषयति वार्तिककारः। एतेन न तच्चक्षुषि नोरूपइति प्रत्युक्तम्। (२६३।६) आत्मनः पारिशेष्यातिसिद्धेः स्मृत्याधारत्वव्युत्पादनेनेत्यर्थः। यत्राधिकरणे तज्ज्ञानं निष्ठितं भवेन्न तदधिकरणमस्ति न च नास्तीति व्याहतम्। स्यादेतद् नायं विशेषप्रतिषेधो न चक्षुषि विज्ञानं न रूपइति, किं तु ये चक्षुराद्याश्रयं विज्ञानं मन्यन्ते तन्मतं प्रतिषिध्यते। आधारवत्त्वं तु न प्रतिषिद्धमप्रसक्तत्वादित्यत आह। कस्य वेति। अपि चैषा कारिका आत्माभावविवक्षया प्रयुक्ता आत्मसत्त्वमेव प्रतिपादयन्ती विवक्षितविरुद्धेत्याह। अयं च विज्ञानस्येति।

तदेवं भाष्यमतेनेन्द्रियान्तरविकारादिति सूत्रं व्याख्याय वार्तिककारः स्वमतेन व्याचष्टे। अथ वैकस्येति। उक्तमेव प्रतिसंधानं पुनरिन्द्रियान्तरविकारद्वारेण दर्शयति सूत्रं यथा च प्रतिसंधानं देहेन्द्रियादिव्यतिरिक्तमात्मानं प्रतिपादयति तथा ऽधस्तादेव विवृतमित्याह। उक्तन्यायमिति ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥

मतिः स्मृत्यनुमानादिज्ञानम् । यद्यपि चेदं प्रातिस्विकसंस्कारादिकारणकं तथाप्यवश्यमेतेनेन्द्रियजेन भवितव्यं ज्ञानत्वाद्रूपादिज्ञानवदिति, तच्चेन्द्रियमसति चक्षुरादौ भावान्मतेश्चक्षुराद्यतिरिक्तं मन इत्युच्यते । ननु भवतु करणान्तरं मनः तत्तु कथमिन्द्रियान्तरसहकारि कथं चाणुपरिमाणमित्यत आह । तच्च ज्ञानायौगपद्यालिङ्गमिति ॥ १६ ॥ १७ ॥

वार्तिकं यदि सर्वं विज्ञानं ससाधनमुच्यते मनस्यपीति । ( ३६४ । १७ ) न च तत्र मन एव करणमात्मनि वृत्तिविरोधादिति तदन्यस्य करणत्वे तज्ज्ञानायापीन्द्रियान्तरमुपासनीयमित्यनवस्था, अनिन्द्रियजत्वे तु मतावपि संस्काराद्येव कारणमस्तीति कृतं मनसेति भावः । परिहरति । ओमितीति । यथा कारणसत्तया कार्यं जनितं कारणं ज्ञायते एवं मनःसत्तया मनोलिङ्गज्ञानं जनितं मनो ज्ञापयति । तच्च लिङ्गजं मनोज्ञानं मनःसत्ताहेतुकम् । न च स्वात्मनि वृत्तिविरोधः न हि मनःसत्तायां मनःकरणं मनोज्ञाने वा मनोज्ञानं करणं येन स्वात्मनि वृत्तिविरोधः स्यात् । केवलं वा मनः स्वज्ञाने करणं येनैकत्र कर्मकरणत्वे स्याताम् । अपि तु मनोज्ञाने लिङ्गज्ञानसहितं मनः करणं तत्स्वरूपं तु लिङ्गज्ञानसाहित्यादिति न स्वात्मनि वृत्तिविरोधः । नाप्येकस्यैव केवलस्य कर्मकरणभाव इति भावः । स्यादेतद् लिङ्गज्ञानसहितस्य मनसः करणत्वे मा भूदेकस्यैव कर्मकरणभावः स्वरूपेण कर्मत्वाद् लिङ्गज्ञानसाहित्येन च करणत्वात् । यदा तु योगिना प्रत्यक्षेण मनो गृह्यते तदा कथमेकस्य कर्मकरणभाव इत्यत आह । यस्य तु मनः प्रत्यक्षमिति ॥ १८ ॥

शास्त्रार्थभूताभ्युदयनिःश्रेयसोपयोगिनं परलोकं परिचिक्षिपुः परीक्षाहेतुभूतं संशयमाह । किं पुनरयमिति । (३६५ ।

८) अत्र वार्त्तिककारः संशयं दूषयन् प्रकरणान्तरारम्भमाक्षिपति। एतस्मिन्नर्थ इति। देहेन्द्रियबुद्धिवेदनाभ्यो व्यतिरिक्तत्वमात्मनो दर्शयता बाल्यकौमारयौवनवार्द्धकभेदे ऽपि चैकात्म्यप्रतिसंधानमर्थादुपपादयता शरीरनाशादूर्ध्वमात्मसद्भावो दर्शितः। तावता च नः प्रयोजनं तत्किमवशिष्यते यत्र संशयो यत्कृते च प्रकरणोत्थानमित्यर्थः। समाधत्ते। नानारभ्यमिति। सिद्धे ऽपि देहादिव्यतिरेके बाल्यादिषु चानुगमे किमयमात्मा आ शरीरोत्पत्तेरा च प्रायणाद्यावद्देहसंतानभावी आहो स्विदुपरते ऽपि देहादिसंताने ऽनुवर्तत एवेत्येष विमर्शो ऽद्यापि न निराकृत इति तन्निरासायेदं प्रकरणमारभ्यत इत्यर्थः।

भाष्यं देहभेदादिति। ल्यब्लोपे पञ्चमी। बाल्यकौमारयौवनवार्धकदेहभेदमभिसमीक्ष्य प्रतिसंधानादस्यावस्थानं सिद्धमित्यर्थः। वार्त्तिकम्। अभिप्रेतविषयप्रार्थनाप्राप्ताविति। अभिप्रेतविषयप्राप्ताविति वक्तव्ये प्रार्थनाग्रहणम् इष्यमाणतमत्वं सूचयति। नेष्यमाणप्राप्तौ हर्षो ऽपि त्विष्यमाणतमप्राप्तौ तेनाभिप्रेतविषयस्य प्रार्थनायां सत्यां प्राप्तावित्यर्थः। हानाशक्यतेति। (३६६।१)विषयेण विषयिणीं बुद्धिमुपलक्षयति। अनिष्टो विषयो मरणादिस्तस्य साधनमहिव्याघ्रादिस्तस्योपनिपातः सन्निधानं तस्मिन्सति व्याघ्रादिजिहासोरशक्यहानमेतदिति बुद्धिर्भयं सा हि कस्यापि जनयति। इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः। तस्यैव पुरुषस्य यः प्राप्त्यशक्यः तत्र प्रार्थना शोकः य इष्टो विषयः प्राप्तुमशक्यस्तत्र प्रार्थना इदं मे उपपद्यतां भवत्विति इत्थंभूता चेयं प्रार्थना न स्वरूपेण शोक इत्यत आह। इष्टविषयवियोगे सतीति। अनर्हणेनेति यावत्। तदयमर्थः। इष्टवियोगे तत्प्राप्त्यशक्यताज्ञानं शोक इति।

अनर्हणेन प्राप्त्यशक्यताज्ञानं शोचतः सूचयति । प्रत्यक्षबुद्धिनिरोध इति । प्रत्यक्षग्रहणेन ग्रहणमात्रमुपलक्षयति । तदनुगृहीतः स्मृत्यनुगृहीतः । तदनुसंधानविषय इति । अनुसंधीयतइत्यनुसंधानं स्मृते यदनुसंधेयं तद्विषय इत्यर्थः । तथाऽपि स्मृतिप्रत्यभिज्ञयोरविशेष इत्यत आह । वर्त्तमानस्य विषयस्य दृश्यस्य तद्भावविषय इति । दृष्टो हि निरालम्बनो बालः स्खलन्मातुरङ्कात्पतनस्यानिष्टसाधनत्वमनुस्मृत्येदं च पतनमिति परामृष्य तस्यानिष्टसाधनत्वमनुमाय रुदन्मातुर्मङ्गल्यमुरःसूत्रं विक्षिप्य हस्तौ वेपमान उपाददानः तस्यानया चेष्टया भयशोकावनुमीयेते इत्यर्थः ॥ १९ ॥

दृष्टेन विशेषितत्वादिति । ( ३६७।१४ ) दृष्टशब्देन विशेषितो व्यवस्थापितः कार्यकारणभावो न शक्यो व्युदसितुमित्यर्थः । अथात्मन उत्पत्तिनिरोधानुमानमिति । यद्विकारि तदुत्पत्तिनिरोधधर्मकं दृष्टं यथा पद्मं तथा चात्मा तस्मादनित्य इत्यर्थः । यदि धर्मोपजननमात्रं विकारः स आकाशादिष्वपीत्यनेकान्तः धर्म्मधर्मिणोश्च भेदान्न धर्मोपजननापायौ धर्मिणि युज्येते इति नानित्यत्वानुमानं विकारात् । अस्माकं त्वात्मनित्यत्वेऽनुमानमस्तीत्याशयेन नित्यत्वानुमान माह । तन्न युक्तमिति । सर्वदाऽमूर्तत्वादिति । घटादयो ऽप्येकस्मिन् क्षणे भवन्त्यमूर्ताः परिमाणविशेषो हि मूर्त्तिः न च द्रव्यसमानकालोत्पत्तिर्गुणानामिति तन्निवृत्त्यर्थं सर्वदेत्युक्तम् ॥ २० ॥

पद्मात्मकानां पद्मादीनां विकाराः पद्मात्मकाविकारा इति २१॥

सामान्यतोऽधिगतस्य विशेषज्ञापनार्थमिति । हर्षादिना सामान्यत इच्छामात्रमवगतं तद्विशेषस्तु स्तन्याभिलाषो रागश्चात्रोक्त इत्यर्थः ॥ २२ ॥

अय-णम् ( सू२३ )॥ न पूर्वाभ्यस्तनुबन्ध एव प्रवृत्तिकारणम् । अयसोऽयस्कान्तोपसर्पणे तदभावात् । यदि च बालकस्य पूर्वाभ्यस्तस्मृत्यनुबन्धो भवेज्जात्यन्धबधिरादयस्तज्जन्मानुभूतान् गन्धस्पर्शान् जात्यन्तरानुभूतान् रूपस्पर्शादीनपि व्याचक्षीरन्नित्यभिप्रायः । विकल्प्य दूषयति । किमिदमिति । ( ३६९ । २ ) यौवनाद्यवस्थायां चेतनस्य प्रवृत्तिः क्षीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य तद्धेतुकैव भवितुमर्हति तेन हेतुना चेतनप्रवृत्तेः स्वाभाविकसम्बन्धावगमाद् वह्निनेव धूमस्य । एवं व्यवस्थिते यत्र स्मृतेः कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते नान्यत्र । न च य एकं स्मरति तेनापरमपि स्मर्तव्यमिति कश्चिन्नियमहेतुरस्ति येन जात्यन्धबधिरादयो रूपादिभेदान् व्याचक्षीरन् अदृष्टपरिपाकोद्बोधितस्य संस्कारस्य तन्नियमेन नियमोपपत्तेः । अद्यत्वेऽपि चानुभूतेषु कस्य चिदेव स्मरत्यात्मा न सर्वस्येति ॥२३॥

भाष्यं न च स्तन्याभिलाषलिङ्गमन्यदिति । स्तन्याभिलाषो लिङ्गमस्य निमित्तान्तरस्य तत्तथोक्तम् । अन्यत्र लोष्टादौ लोष्टादेरिति यावत् । षष्ठीसप्तम्योरभेदार्थत्वात् । एतदुक्तं भवति लोष्टादेरन्यस्यायस्कान्तप्रवृत्त्यभावाद् अयसश्च सनिमित्तमुपसर्पणमिति पूर्वं व्याख्यातम् । संप्रति त्वन्यथा व्याचष्टे अयसः खल्वपीति । निपातसमुदायः कल्पान्तरं द्योतयति॥२४॥

पूर्वानुभूतविषयानुचिन्तनमिति । एकविषयः स्मृतिप्रवाहो विजातीयप्रत्ययासंभिन्नश्चिन्तनं, तच्चानुभवश्च पश्चाद्भवतीत्यनुचिन्तनं, न च तत्स्मृतिमन्तरेण भवति, न हि तत्र प्रवाहः प्रवाहिणं विनाऽस्ति तदेवानुचिन्तनं पूर्वानुभूतविषयप्रार्थनार्थः सङ्कल्पः प्रार्थना सङ्कल्पः स च पूर्वानुभूतविषय इत्यर्थः । अथा-

स्मिन्नेवजन्मनि इन्द्रियजो विषयानुभवोऽन्वयव्यतिरेकावधारिते-ष्टोपायतासहकारी कस्माद् रागहेतुर्न भवतीत्यत आह वार्तिककारः। न विषयावगमासमर्थेष्विति। तदनेन पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनीति भाष्यं व्याख्यातम् ॥ २५ ॥

अत्रायमुदितानुवाद इति भाष्यम्। तस्यार्थः उदितमिदं चोद्यम् अयस्कान्तदृष्टान्तेन चोद्येन, तथाऽपि तस्यानुवादो निदर्शनार्थः। पूर्वमयस्कान्तो निदर्शनमिदानीं तु घटादीनामुत्पद्यमानानां रूपादयो निदर्शनमिति तदर्थमित्यर्थः। चोद्यस्योदितानुवादत्वात्परिहारोऽप्युदितानुवाद एवेति। तन्मयत्वाद्राग इति। (३७०। ३) अभ्युपेत्यादृष्टकारणत्वं रागादीनां परिहृतं परमार्थतस्तु तन्मयत्वाद्राग इत्यर्थः। स्यादेतद् यदि पूर्वाभ्यस्तस्मृत्यनुबन्धाद्रागादीनामुत्पादो हन्त मनुष्यजन्मानन्तरं प्राप्तकरभभावस्य मनुष्यजन्मोचितानां भावानामानन्तर्यात्तदनुरूपा एव रागादयो भवेयुर्न करभभावानुरूपाः करभजातेरस्य विजातीयजन्मसहस्रव्यवहितत्वादत आह। जातिविशेषाच्चेति। कर्मणः संस्कारोद्बोधकत्वात्करभजात्यर्थेन कर्मणा जन्मसहस्रव्यवहिताऽपि करभभावनोद्बोध्यते नानन्तराऽपि मनुष्यभावना प्रायणाभिभूतेति भावः ॥ २८ ॥

ननु सगुणद्रव्योत्पत्तिवदिति साधनपक्षे मा भूदनैकान्तिकापादनपक्षे तु को दोष इत्यत आह वार्तिककारः। अनैकान्तिकपक्षे सूत्रं न कस्मात् नोक्तोत्तरत्वात्। उक्तोत्तरमेतद्यत इति ॥ २६ ॥

अपि च मनुष्यत्वेन तुल्यत्वेऽपि प्रज्ञामेधाप्रकर्षनिकर्षभेददर्शनात् प्राग्भवीयाभ्यासकल्पना अद्यत्वेऽपि हि शास्त्राभ्या-

सस्तद्गोचरप्रज्ञामभिवर्धयन्नन्वयव्यतिरेकाभ्यामनुभूयते सोऽयमिह जन्मन्यकृतशास्त्राभ्यासस्य तद्विषयः प्रज्ञामेधातिशयः प्राग्भवीयाभ्यासातिशयं स्वकारणमवगमयति, जनस्य तिर्यगादिजातिशतव्यवधानपरिम्लानप्राग्भवीयसंस्कारस्य प्रज्ञामेधानिकर्ष इति कल्पनीयं तस्मान्नित्यस्यात्मनः कर्माविद्यानिबन्धनोऽनादिरेषोऽनेकविधशरीरपरिग्रहपरित्यागप्रवाहोऽपवर्गान्त इति सिद्धम् ॥२७॥

आत्मानन्तरमुद्दिष्टं शरीरं परीचिक्षिषमाणोऽवान्तरसङ्गतिमाह भाष्यकारः अनादिश्चेतनस्य शरीरयोग इत्युक्तम् । परीक्षोपयोगिनिर्वेदसाधनत्वमाह । स्वकृतकर्मेति । परीक्षापूर्वरूपं संशयमाह । किं घ्राणादिवदिति । एकद्वित्रिचतुःपञ्चप्रकृतिकतामास्थिषत शरीरस्य वादिनः सोऽयं संख्याविकल्पः ।

अत्र वार्तिककारः स्वातन्त्र्येण शरीरपरीक्षायां सङ्गतिमाह । आत्मानन्तरमिति । भाष्यमतेन सङ्गतिमाह । अथ चेति । अवान्तरसङ्गतेस्तात्पर्यमाह तस्मिन् परीक्ष्यमाणइति । मानुषं शरीरं पार्थिवं गन्धवत्त्वात् पार्थिवपरमाणुवदिति । न कारणं कार्यस्यात्मा तत्कथमेकात्मकमित्यत आह । एकात्मकमित्येकस्वभावं स्वो भावो भवितॄणां जातिः एकजातीयसमवायिकारणत्वे हि तत्तदेकजातीयं स्याद् नान्यथेत्यर्थः । परोक्तान् हेतूनन्यथासिद्धयिष्यन्प्रथमं तावत्सुहृद्भावेनाह नन्विदमबादिभिरिति । ( ३७१ । ३ ) परोक्तसाधनमन्यथासिद्धमुक्त्वा बाधकमुक्तं भाष्यकृता तदनुभाष्य वार्तिककारो व्याचष्टे । तदिदमनेकप्रकृतीति । पृथिव्युदकाभ्यामारभ्यमाणमगन्धं कारणगन्धस्यैकस्यानारम्भकत्वात् । अयमभिसन्धिः पृथिव्याप्यपरमाणू तावन्नैकं द्व्यणुकमारब्धुमर्हतः तयो रूपरसस्पर्शवत्त्वेन तदारम्भसम्भवेऽपि गन्धवत्त्वाभावप्रसङ्गात् । एवं पार्थिवाणुसमवेतस्य गन्ध-

स्यैकत्वेनानारम्भकत्वात् । नापि पार्थिवपरमाणुद्वयमेकश्च पाथसीयः परमाणुरित्यणूनामारम्भकत्वे गन्धवत्त्वोपपत्तिरिति साम्प्रतम् । परमाणूनां बहूनामनारम्भकत्वात । तथा हि त्रयः परमाणवो न कार्यद्रव्यमारभन्ते परमाणुत्वे सति बहुत्वसंख्यायुक्तत्वाद् घटोपगृहीतपरमाणुप्रचयवत् । आरम्भकत्वे तेषां घटोपगृहीतानां कपालशर्कराचूर्णक्रमो घटनाशे नोपलभ्येत त्र्यणुके च विजातीयानारम्भकत्वे सिद्धे तेनैव दृष्टान्तेनान्यत्रापि विजातीयेनारम्भो निषेध्यः । एतेन पार्थिवावयवानां महतां पाथसीयैरवयवैः शरीरारम्भः प्रत्युक्तः विजातीयानामनारम्भकत्वस्य दृष्टान्तधर्मिणि विनिश्चयादिति । तदनेन वार्तिककृता षड्विंशतिकल्पा निराकृता इति । यदि पुनरेकैकं कारणं स्यात् ततः किं भवेदित्यत आह । एककारणत्वे त्विति । ( ३७२ । ६ ) नित्यं निरपेक्षमेकं कारणमिति सततोत्पत्तिः कार्यस्य भवेत् । कारणविनाशात्तद्विभागाद्वा द्रव्यं विनश्यति न चैकस्य कारणस्य नित्यस्य विनाशोऽस्ति । न च विभागः तस्य सद्वितीयवस्त्वाश्रयत्वात् । एकस्य च द्वितीयाभावात् । विनाशकारणाभावात्कृतकनित्यत्वप्रसङ्गः रूपमसहायमेकमवयविनि न रूपमारभतइति नीरूपो ऽवयवी तथा च रूपसंस्काराभावेनावयवी नोपलभ्येतेत्यर्थः । स्मृतिरुत्पत्तिरित्यर्थः । न्यायसिद्धमर्थं श्रुतिरुपोद्बलयति न पुनरस्य प्रापिका सांख्यराद्धान्तावलम्बनेनाप्यस्याः कथं चिदुपपत्तेः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

उद्देशक्रमानुरोधाच्छरीरानन्तरमिन्द्रियाणां परीक्षां प्रतिजानीते भाष्यकारः । अथेदानीमिन्द्रियाणि प्रमेयक्रमेणेति । तत्र परीक्षापूर्वरूपं संशयमाह । किमाव्यक्तिकानि आहो स्विद्भौतिकानीति । उपलक्षणं चैतत् । यदाऽपि भौतिकानि

तदापि किं कृष्णसारं यदेतदुपलभ्यते तदेवेन्द्रियम् आहो तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः। विप्रतिपत्तेः संशयः। तत्र पूर्वः सांख्यनैयायिकयोर्विप्रतिपत्तेः। उत्तरस्तु सौगतनैयायिकयोरिति। आव्यक्तिकत्वमाहङ्कारिकत्वं द्रष्टव्यम्। अहङ्काराद्धि बुद्धिविकाराद्वैकारिकादेकादशेन्द्रियाणि जायन्त-इति हि सांख्याः आव्यक्तिकत्वं त्वव्यक्तस्य मूलकारणत्वा-दुक्तम्। विप्रतिपत्तिबीजं पृच्छति। कुतः संशय इति विप्र-तिपत्तिमाह कारणे कार्योपचारात्। उत्तरं कृष्णसारे सती-ति। कृष्णसारे सत्युपलम्भात् कृष्णसारमेव चक्षुरिति बौद्धाः। व्यतिरिच्य चोपलम्भात् तदतिरिक्तं तच्चाहङ्कारि-कम्। अहङ्कारस्य विभुत्वेनाप्रतिघातात्। भौतिकत्वे काचा-भ्रपटलादिभिर्भौतिकैः प्रतिघातप्रसङ्गादिति सांख्याः ॥ ३३ ॥

तत्र सांख्यमुत्थाप्य बौद्धपक्षं दूषयति। अभौतिकानी-ति। कृष्णसाराधिकग्रहणे विवक्षिते ऽर्थग्रहणं संपातायातं न तु तदत्र विवक्षितम् असाधकत्वादिति। धाना अङ्कुरः ॥३४॥

नैयायिकः सांख्यं दूषयति ॥

रश्म्यर्थम् ( सू० ३५ ) ॥ आहंकारिकत्वे चक्षुर्न प्रति-हन्यते यदि तत् काचाभ्रपटलान्तरितप्रकाशवत् कुड्यान्तरित-मपि प्रकाशयेत्। न चैवमस्ति, तस्मात्कृष्णसाराधिष्ठानं तेज एव भौतिकं प्राप्य गृह्णाति कुड्यान्तरितं त्वर्थमप्राप्तं न गृह्णाति। काचाभ्रपटलान्तरितं तु वक्ष्यति।

वार्तिकं किमाव्यक्तिकानि ( ३७३। १ ) तस्य व्याख्यानमाहंकारिकाणीति। न प्रदीपादिभिरने-कान्तादिति। वर्तिदेशस्थेन पिण्डितेन तेजसा प्रदीपेनानेका-न्तात्। प्रभा हि विसारिणी तमर्थं प्राप्य प्रकाशयति न तु

प्रदीप इत्यर्थः । विषयीभावादिति चेदिति । उत्पादविशेष एव स तादृक् चक्षुरर्थक्षणयोर्यतो ऽप्राप्तयोरपि विषयविषयिभावाद्वेद्यवेदकत्वं, न चायं व्यवहितविप्रकृष्टयोरिति न तयोर्वेद्यवेदकभाव इत्यर्थः । निराकरोति नोक्तोत्तरत्वात् । स एवार्थो विप्रकृष्टो न विषयः सन्निकृष्टश्च विषय इत्येकस्य विषयीभावस्तदभावश्चायुक्तः क्षणभङ्गश्च निषेत्स्यत इति भावः ॥ ३४॥

अभौतिकत्वं तु व्यापकत्वादिति । (३७४।२) तद्यथा विज्ञानाद्यभौतिकं महच्चाणु च गृह्णातीत्यर्थः । एकदेशिमतेन दूषणमाह । न भौतिकेषु प्रदीपादिष्विति । ननु बुद्धिर्यदि महदण्वोः प्रकाशनं तत् किमिदानीं सर्वस्यैवाप्रकाशनमित्यत आह । अवधारितस्यत्यर्थस्येति । न च हानोपादानोपेक्षाबुद्ध्यो ऽण्वो महत्यो वेति भावः । पूर्वपक्ष्याह नेन्द्रिये ऽपि समानत्वादिति । तदेवमेकदेशिना ऽसाधारणत्वापादने पूर्वपक्षिणा दूषिते सिद्धान्त्याह । अभूतात्मकं व्यापकं चेति । सांख्यः शङ्कते । वृत्तिरिति । इन्द्रियाणां वृत्तयो ज्ञानहेतवः प्रतिषिध्यन्तइत्यर्थः । युगपदनेकग्रहणप्रसङ्गाच्चेति । यद्यपि सांख्यीयराद्धान्ते दीर्घां शष्कुलीं भक्षयतो युगपदनेकज्ञानोत्पत्तिरभिमता तथाऽपि क्वचित् क्रमोऽपि दृश्यते स न स्याद् वृत्तिमतो ऽवस्थाने तदभिन्ना वृत्तिरप्यवतिष्ठतइति तन्मात्राधीनोत्पत्तीनां विज्ञानानां क्रमो न स्यादिति भावः । उभयं नेष्यतइति । (३७६।४) वृत्तिभ्योऽनन्यत्वं वृत्तिमतो नेष्यते नापि वृत्तीनामनन्यत्वं वृत्तिमत इत्यर्थः ॥ ३४ ॥

भूयोऽवयवसन्निकर्षानुग्रह इति । इन्द्रियावयवानामर्थावयवैः इन्द्रियावयवानामर्थेन अर्थावयवानामिन्द्रियेण इन्द्रियस्यार्थेनेति ॥ ३५ ॥

तदनुपलब्धेरिति । नोपलब्धिलक्षणप्राप्तमनुपलभ्यमानं शक्यमनुमातुं नरविषाणादीनामप्यनुमानप्रसङ्गादित्यर्थः ॥३६॥

परिहारः नानुमीयमानस्येति । सत्यमनुपलब्धिलक्षणप्राप्तमनुपलभ्यमानं न शक्यमनुमातुं न तु महत्त्वाद्येवोपलक्षणप्राप्तेरपि तु रूपाविशेषोऽपि । न चासौ विशेष उद्भवसमाख्यातः कृष्णसाराधिष्ठानस्य चक्षुषोऽस्तीत्यर्थः ।

आचार्यदेशीयानां मतमाह । अपरेत्विति । (३७६ । १६) दूषयति । एवं तर्हीदमिति । यत्रोपलब्धिस्तत्रैतदिति सूत्रार्थः । ततो महत्त्वादिषु मध्ये यत्किंचिदेकं वक्तव्यं सूत्रकारेण यत्रोपलब्धिस्तत्रैतादित्यकस्मादेव सिद्धेरनेकोपादानवैयर्थ्यं तस्मात्समुद्भावनायोग्यताभिधानपदं सूत्रम् ॥ ३७ ॥

ननु यथाश्रुतं महत्त्वाद्युपलब्धिकारणमस्ति चाक्षुषस्य रश्मेरिति कस्मादयं नोपलभ्यत इत्यत आह । द्रव्यगुणधर्मेति॥३८॥३९॥

अनेकरश्मिसन्निधाने स्पर्शस्योद्भूतौ सत्यां द्रव्यं दृश्येत रूपोद्भूतौ सत्यां व्यवहितत्वादादौ निपतितेन चक्षुरन्तरेण द्रव्यस्यानुपलब्ध्या भवितव्यम् । शङ्कते अनेकेति । (३७९।९) नानानयनावयवैरेकोऽसौ नयनावयव्यारभ्यतइत्यर्थः । निराकरोति एवं सतीति । नानानयनावयवैरारब्ध एकोऽसौ नयनावयवी समग्रासमग्रचक्षुःपुरुषसाधारण इत्युपलब्धिस्तुल्या स्यादित्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥

न हि यद्यस्याभिभावकं तत्तस्य व्यञ्जकमिति । (३८०।१७) रात्रौ यद् लोष्टतेजसोऽभिभावकं दिवा कथं तदेवास्य व्यञ्जकं येन तदभावाद्रात्रौ लोष्टतेजो नोपलभ्येत इत्यर्थः । अपिशब्दादुगम्यत इति । न रात्रावपीति सूत्रगतादित्यर्थः ॥ ४३ ॥

तौ तेनाज्ञानाद्विपरीतज्ञानाच्च प्रतिज्ञान्तरं निग्रहस्थानमिति ।

यत्पुनरुच्यते परैः अत्यन्तासम्बद्धमेतद् यत्प्रतिज्ञा प्रतिज्ञासाधनायेति यो हि प्राक् प्रतिज्ञामुक्त्वा हेतुदाहरणादिकं वक्तुं जानाति स कथं चिदनुक्रमं साधनस्य जानात्येव जानन् कथमपि कलान्तःकरणः प्रतिज्ञामेव प्रतिज्ञासाधनायोपाददीतेति । तत्र ब्रूमः नायं प्रतिज्ञया प्रतिज्ञा साधनीयेति बुद्ध्या प्रवृत्तः किं त्वसर्वगतत्वं शब्दस्य मीमांसकं प्रति साधयित्वा तेनैन्द्रियकत्वं विशिष्यानैकान्तिकत्वमुद्धरणीयमिति मनोरथेन प्रवृत्तः प्रतिज्ञां कृतवान् असर्वगतः शब्द इति । अथास्य प्रतिवाद्यवष्टम्भात्परिषद्दर्शनाद्वा स्तम्भितत्वे साधनाप्रतिभया तूष्णीं भवतः प्रेक्षावतो ऽपि प्रतिज्ञान्तरं भवति निग्रहस्थानम् । अयं च विकलान्तःकरणस्य निग्रहो भवद्भिरप्युक्त एव तदभ्युपगम्याप्रतिभया तूष्णींभावादिति वदद्भिः सो ऽयमीदृशो ऽसत्प्रलापो भवद्भिः शास्त्रे निबन्धनीयो न त्वस्माभिरिति व्यक्तमियं राजकुलस्थितिरिति सर्वं चतुरस्रम् ।॥३॥

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ( सू. ४ )॥

अत्र प्रतिज्ञाहेत्वोरिति प्रतियोगिद्वयमात्रोपलक्षणपरम् । तेन दृष्टान्तादयो ऽपि प्रतियोगिन उन्नेयाः । एतदुक्तं भवति येषां वाक्यगतानां पदार्थानां मिथो व्याघातः प्रतीयते प्रमाणान्तरं च विरोधकं स विरोधो नाम निग्रहस्थानम् । लक्ष्यस्थितस्य प्रतिज्ञाग्रहणस्याप्युपलक्षणार्थत्वात् । नचैवं भाण्डालेख्यन्यायः एकदेशेनाव्यापकेन समुदायसंग्रहे स हि भवति, न तु व्यापकेन संग्रहे व्यापकं चानवयवेन इदंप्रतियोगिमिथुनयोर्विरोधः अतो यथाश्रुति तावत्सूत्रं व्याचष्टे वार्तिककारः यत्र प्रतिज्ञा हेतुना विरुध्यत इति । द्वयोर्विरोधे यस्य प्रमाणान्तरानुग्रहस्तेन तद्बाध्यतइति तेन तद्विरुध्यतइत्युच्यते । यत्र प्रतिज्ञया हेतुर्विरुध्य-

ते तदुदाहरति । यथा गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति । अत्र हि भेदेनाग्रहणादित्यनेन ग्रहणप्रतिषेधेन ग्राह्याभाव उपलक्ष्यते । तेनैवं हेत्वर्थो भवति गुणव्यतिरिक्तं द्रव्यमव्यतिरेकादिति । सो ऽयं प्रतिज्ञाहेतुपदयोर्व्याप्तिस्मरणानपेक्ष एव परस्परव्याघातो ऽस्तिनास्तिपदयोरेव । न चैवंविधः शब्दे नित्यत्वकृतकत्वयोर्येन कृतकत्ववद्विरुद्धो ऽयं हेत्वाभासः स्यात् । तत्र हि कृतकत्वस्य नित्यत्वेन व्याप्तिस्मरणापेक्ष एव विरोधः प्रतीयते न त्वयं तथा अस्तिनास्तिवत्स्वभावविरोधात् । यद्यप्यसिद्धो ऽपि हेतुस्तथा ऽप्यस्यासिद्धिर्बाधकं प्रमाणान्तरमनुसृत्य प्रतिपत्तव्या प्रतिज्ञाविरोधस्तूच्चारणमात्रादेव प्रथमत एव गम्यतइति । तेनैव दूषितेनासिद्धिः पश्चात्तनी न दूषणत्वाय कल्पते भस्मीकृते दहनवत् । प्रतिज्ञाहेतुविरोधमात्रेण च निग्रहसिद्धेः सुहृद्भावमात्रेण प्रतिज्ञाया बलवत्तास्मरणम् । प्रतिज्ञायाश्चात्र बलवत्त्वं प्रमाणान्तरानुग्रहात् । तथा हि दर्शनस्पर्शनाभ्यामेकार्थप्रतिसंधानाद्रूपादिव्यतिरिक्तं द्रव्यं सिध्यतीति तदनुगृहीता प्रतिज्ञैव हेत्वर्थं बाधतइति । एतेनैवेति । लक्षणेन । श्रमणा गर्भिणीति श्रमणा ब्रह्मचारिणी नान्तर्वत्नी भवितुमर्हति जितेन्द्रियस्योपस्थसंयमो हि ब्रह्मचर्यं, न-चाऽसाधनाङ्गस्य प्रतिज्ञाया वचनादेव निगृहीत इति कृतं विरोधोद्भावनेन निष्पादितक्रिये कर्मणि अविशेषाभिधायिनो दूषणस्य दूषणन्यायातिपातादिति सांप्रतम् । प्रतिज्ञायाः साधनाङ्गत्वस्य प्रथमएवाध्याये दर्शितत्वात् । हेतुविरोधो ऽपि यत्र हेतुना प्रमाणान्तरेणानुगृहीतेन प्रतिज्ञा बाध्यते । यथा सर्वं पृथगिति प्रतिज्ञा न किं चिदेकमित्यर्थः । हेतुः समूहे भावशब्दप्रयोगादिति । एकसमुच्चये घटादिप्रयोगादित्यर्थः । नास्त्येकमेकसमुच्चयश्चेति वचनं मिथो वि-

रुध्यते विनैव व्याप्त्यनुस्मरणमिति । न च सर्वनास्तित्ववादिनो नैकसमुच्चयो ऽस्तीति वक्तव्यम् असति हेतौ साध्यसिद्धेरयोगात् । न च कल्पितस्य हेतोः साधनाङ्गतेति तत्र तत्र निवेदितम् ! अत्र चैकसमुच्चयस्य प्रमाणानुग्रहान्नैकं किं चिदिति प्रतिज्ञा हेतुना बाध्यते । एतेन लक्षणेन प्रतिज्ञाया दृष्टान्तविरोधोऽपि वक्तव्यः । यथा नित्यः शब्दः प्रमेयत्वाद् यत्प्रमेयं तन्नित्यं यथा ऽऽकाशमिति साधर्म्यदृष्टान्तः । यद्यप्यत्र वस्तुतो हेतुरनैकान्तिकस्तथा ऽपि दृष्टान्तस्य प्रतिज्ञाविरोधेनैव निगृह्यते विरोधस्य वाक्ये प्रथममवगतेः । अनित्यं घटाद्युन्नीयानैकान्तिकत्वप्रतिपत्तेस्तज्जघन्यत्वादिति । हेतोश्च दृष्टान्तादिभिर्विरोध एतेन वक्तव्य इत्यनुषज्यते यथा नित्यः शब्द ऐन्द्रियकत्वादनैन्द्रियद्व्यणुकवदिति । अत्राप्यैन्द्रियकत्वानैन्द्रियकत्वयोः शब्दतो विरोधः प्रतीयते साधनवैकल्यं तु वस्तुस्वभावालोचनयेति विशेषः। एवमुपनयेन विरोधो ऽनैन्द्रियकश्च शब्द इति । अत्रापि वस्तुस्वभावालोचनया ऽनैन्द्रियकत्वासिद्धिः प्रतीयते शब्दतस्तु विरोध इति । प्रमाणविरोधश्च प्रतिज्ञाहेत्वोर्वक्तव्यः । (५५४।१) यद्यपि बाधितविषयं हेत्वाभासान्तर्गतं तथापीहाप्यस्तीति विरोधहेत्वाभासयोरत्र निग्रहस्थानयोः समावेशो ऽस्तु न क चिद्विषये समावेशादानर्थक्यम् । विषयान्तरे समावेशाभावादर्थवत्त्वात् । दर्शितं चानन्तरमेव भिन्नविषयत्वमिति । तदेवं साधनवादिनो विरोधं निग्रहस्थानमभिधायोत्तरवादिनोऽपि निग्रहस्थानमनेनैव संगृहीतमित्याह । परपक्षासिद्धेन गोत्वादिनेति । यदा हि बौद्धेन प्राभाकरं प्रति साध्यते अनित्यः शब्दः श्रावणत्वादिति । यद्यनित्यत्वं न भवेच्छ्रावणत्वं न स्यादिति प्राभाकरो ऽनैकान्तिकत्वमुद्भावयति श्रावणं शब्दत्वं नित्यं चेति

तदास्यानैकान्तिकत्वोद्भावनं स्वकीयशब्दत्वनिराकरणविरुद्धमिति । परपक्षसिद्धं गोत्वाद्यपीदृशएव विषये विरुद्धे द्रष्टव्यम् । सिद्धान्तविरुद्धं च साधनं विरुद्धमित्याह । स्वपक्षानपेक्षं च । ननु यद्यनैकान्तिकोद्भावनमपि विरुद्धं कस्तर्ह्यनैकान्तिकत्वापादनस्य विषय इत्यत आह । उभयपक्षसम्प्रतिपन्नास्त्विवति । देशयति । दृष्टान्ताभासा इति । अवयवान्तरं हि प्रतिज्ञाहेत्वादिभ्य उदाहरणं तेन हेत्वाभासोक्त्या तस्य सङ्ग्रहः । पारम्पर्येण तूदाहरणाभासस्य हेतुदूषकत्वेन सर्वमेव हेतुदूषकमिति भावः । परिहरति हेत्वाभासपूर्वकत्वादिति । हेत्वाभासा इत्यत्र हेतुशब्दः स्वार्थमपरित्यज्य दृष्टान्तमुपलक्षयति । उपलक्षणे हेतुरुक्तः हेत्वाभासपूर्वकत्वाद्धेत्वाभासप्रधानकत्वाद् दृष्टान्ताभासेनापि हेतुरेव दूष्यते यतः । न चैतावता प्रतिज्ञादिदोषोपलक्षणप्रसङ्गः । न हि यत्र यत्र निमित्तमस्ति तत्सर्वमुपलक्षणीयं, किं तु यदुपलक्ष्यते तत्रावश्यं निमित्तं वक्तव्यम् । न च सूत्रकारस्य सर्वत्र लाघवादरो दृढ इत्युक्तम् । तस्मात्सर्वं रमणीयम् ॥ ४ ॥

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः । (सू. ५) ॥ ऐन्द्रियकत्वस्य हेतोरनैकान्तिकत्वोद्भावनेन शब्दानित्यत्वपक्षे प्रतिक्षिप्ते वादी प्रतिवादिनं ब्रूयादनैकान्तिकत्वमुद्दिधीर्षुः कः पुनराहानित्यः शब्द इति । यद्यहमनित्यः शब्द इति प्रतिज्ञातमपह्नोतुं शक्नोमि तदा न सामान्येन नित्येन मे हेतुरनैकान्तिको भवतीति बुद्ध्या ऽह्नुपते सो ऽयमेवंवादी न शक्यो ऽनैकान्तिकत्वेन जेतुम् । अपह्नवस्यापह्नवत्वावेदने ऽनैकान्तिकत्वोद्धारात्तस्मादनैकान्तिकस्यानैकान्तिकत्वस्थापनायापह्नवस्यापह्नवत्वमुद्भावनीयम् । तत्र किमपह्नवत्वमुद्भाव्यानैकान्तिकत्वं व्यवस्थाप्य निगृह्यतामुतापह्नवादेवेति संशये ऽपह्नवत्वोद्भावनेनैव

पूर्वापरपराहते निर्गृह्यते नानैकान्तिकत्वेन तत्पूर्वकत्वादनैकान्तिकत्वस्थापनस्य । तस्माद्यदुक्तं कीर्तिना किमिदानीं हेत्वाभासादुत्तरप्रतिज्ञासंन्यासापेक्षया तस्य प्रतिवादिनो हेत्वाभास एवाद्यं निग्रहस्थानमिति तदप्यपास्तम् । प्रतिज्ञासंन्यासस्यैव पूर्वभावित्वात् । यदपि तेनोक्तं पक्षप्रतिषेधे तूष्णींभवतस्तूष्णींभावो नाम निग्रहस्थानं प्रलपतश्च प्रलपितं नामेत्याद्यपि वाच्यं स्यादिति । तदप्यसांप्रतम् । न हि तूष्णीम्भावेन प्रलपितादिभिर्वा शक्यमनैकान्तिकत्वमुद्धर्तुं यथा प्रतिज्ञार्थापह्नवेन, न चैते हेत्वाभासोद्भावनस्य पुरस्तात्तनाः तस्मादेतदप्यनिरूपिताभिधानाद्यत्किञ्चिदिति ॥ ५ ॥

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ( सू. ६ ) ॥

व्याख्यातुं निदर्शनमाह निदर्शनमेकप्रकृतीदं व्यक्तं भूतभौतिकेन्द्रियमेकप्रकृतीनां विकाराणां परिमाणात् । तद्यथा एकमृत्पूर्वा घटशरावोदञ्चनादयः परिमिता दृष्टाः यावान् प्रकृतेर्व्यूहः संस्थानं तावान्विकार इति । न चैतदुदाहरणं साधनविकलमित्याह दृष्टं चेति । उपनयमाह अस्ति चेदमिति । निगमनमाह तदेकप्रकृतीनामिति । अस्य परिमितत्वस्य हेतोर्व्यभिचारेण प्रत्यवस्थानं प्रतिवादिनः । नानाप्रकृतीनां घटरुचकादीनामेकप्रकृतीनां च घटशरावादीनां दृष्टं परिमाणमिति । एवं प्रत्यवस्थिते प्रतिवादिनि वादी पश्चात्परिमितत्वं हेतुं विशिनष्टि एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनादिति । प्रकृतिः स्वभावः, एकस्वभावसमन्वये सतीत्यर्थः । एकप्रकृतिसमन्वयं स्फुटयति । सुखदुःखमोहसमन्वितं हीदं सर्वं व्यक्तं परिमितं गृह्यते ।

तथा हि । मैत्रदारेषु नर्मदायां मैत्रस्य सुखबुद्धिर्भवति तत्सपत्नीनां च दुःखबुद्धिः चैत्रस्य तामविन्दतो रणरणकवतो मोहो विषादः । नर्मदया भावान्तराणि व्याख्यातानि । तदेवं यत्रैकस्वभावसमन्वये सति परिमाणं तत्रैकप्रकृतित्वमेव तद्यथैकमृत्पिण्डस्वभावेषु घटशरावोदञ्चनादिषु । घटरुचकादयस्तु नैकस्वभावाः मार्दसौवर्णादीनां स्वभावानां भेदात् । निर्दिश्यात्र सूत्रं योजयति तदिदमविशेषोक्ते हेतौ प्रतिषिद्धइति । अस्य निग्रहस्थानत्वमाह । सति च हेत्वन्तरभावइति । अपि च यदि हेत्वन्तरवचने विश्वमेकप्रकृति साध्यते तदा निदर्शनं नास्ति सर्वस्य पक्षे निक्षेपात् । अथ निदर्शनासिद्ध्यर्थं किं चित्पक्षाद्व्यतिरिच्यते ततस्तेनैवानैकान्तिकत्वम् । अन्वितानां परिमितानां भिन्नप्रकृतिकत्वादित्याह । हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शन इति । हेतुः साधनम् अर्थः साध्यः तौ हेत्वर्थौ निदर्शयति व्याप्यव्यापकभावेनेति । निदर्शनः निदर्शनः हेत्वर्थयोर्निदर्शनो हेत्वर्थनिदर्शनो दृष्टान्तः स यद्युपादीयते ततो नेदं व्यक्तमेकप्रकृति भवति दृष्टान्तस्य प्रकृत्यन्तरोपादानात् ।

वार्तिकं साधनान्तरोपादाने पूर्वस्येति । दत्तोत्तरावसरएव वादिनि यदि प्रतिवादी हेत्वर्थं व्यभिचारयति वादी च तृतीयपदके स्थितो हेतुं विशेषयति तदा साधनान्तरोपादानान्निगृह्यताम्रुतानैकान्तिकसाधनोपादानात् । न तावदनैकान्तिकसाधनादस्य निग्रहो हेतुविशेषणेन समाहितत्वादिति । तस्माद्धेत्वन्तरवचनादेव निगृह्यते पूर्वस्य वस्तुतोऽसमर्थस्यासामर्थ्यख्यापनात् । सामर्थ्ये वा हेत्वन्तरानर्थक्यमिति सूक्तम् ॥६॥

प्रकृतादर्थादप्रतिसम्बन्धार्थमर्थान्तरम् ( सू. ७ ) ॥

व्याचष्टे यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे सति वादे जल्पे वितण्डायामित्यर्थः । हेतुतः साध्यसिद्धौ प्रकृतायां वादी साधनं ब्रूयाद् नित्यः शब्दोऽस्पर्शत्वादिति । अत्रान्तरे सुखादिभिर्व्यभिचारेण हेतोरसामर्थ्यं पश्यन् तत्प्रच्छादनार्थं प्रसक्तानुप्रसक्त्या तं तमर्थमुपन्यस्यन्नर्थान्तरेण निगृह्यते । अभिधेयस्य क्रियान्तरयोगात् क्रियाविशेषस्य योगाद्विशिष्यमाणरूपो भिद्यमानरूपः शब्दो नामेति यथा वृक्षस्तिष्ठति वृक्षं छिनत्ति वृक्षेण चन्द्रमसं पश्यति वृक्षायोदकमासिञ्चतीत्यादि । तदेवमभिधेयस्य क्रियाविशेषयोगाद्विशिष्यमाणरूपः शब्दो नामेति । आख्यातस्वरूपमाह । क्रियाकारकसमुदाय इति । विषयेण विषयिणमुपलक्षयति । पचति पच्यतइत्येवमादयः शब्दाः क्रियां कारकं कर्तारं कर्म चाभिवदन्ति तदेतल्लक्षणमसिद्धमतिव्यापकं च, न हि कर्ता कर्म वा आख्यातेनाभिधीयते । क्रियाक्षेपेणैव तयोः प्रतिलम्भात् । अनन्यलभ्यस्य च शब्दार्थत्वात् । कर्तृकर्मणोश्च कारकान्तरेभ्यो भावनायामभ्यर्हिततमत्वेन तत्सङ्ख्याभिधाननियमादसिद्धं कारकाभिधानम् । अतिव्यापकं च पाचकः पाक्य इत्यादेर्नाम्नो ऽपि क्रियाकारकसमुदायाभिधायित्वात् । तदस्मिन् लक्षणे ऽपरितुष्यन् लक्षणान्तरद्वयेनाख्यातपदान्युपसंगृह्णाति । कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातम् । पचति पच्यतइत्यादौ कर्तुः कर्मणो वा संख्यया कालेन वर्तमानादिना विशिष्टा क्रिया प्रतीयते । कालश्च क्व चिदस्तीत्येतावतोक्तो, न तु विवक्षितो लक्षणे पचत यजेतेत्येवमादौ तद्योगाप्रतीतेः । अनेन लक्षणेन स्थीयते सुप्यतइत्यादीनामाख्यातानामसङ्ग्रहः कारकतत्संख्ययोरप्रतीतेः तत्संग्रहाय द्वितीयं लक्षणमाह । धात्वर्थमात्रं च काला-

भिधानाविशिष्टमाभिधीयतइत्यभिधानम् । प्रयोगेष्विति । नाम्नो वा ऽऽख्यातस्य वा तदर्थाद्भिद्यमानरूपा निपाताः । यथा समुच्चयविकल्पादिनामपदैः समुच्चयादयः समुच्चेतव्यान्नामार्थादाख्यातार्थाद्वा भेदेनोच्यन्ते तत्र षष्ठीप्रयोगात् । तेषां समुच्चयो विकल्पो वेति नैवं चादयः स्वार्थान्नामार्थादाख्यातार्थाद्वा भेदेनाभिदधति । रूप्यन्ते प्रतिपाद्यन्ते रूपाणि अर्थान्नामार्थादाख्यातार्थाद्वा भिद्यमानं रूपं प्रतिपाद्यमानं येषां निपातानां ते तथोक्ताः । उपसृज्यमानाः समीपे प्राक् प्रयुज्यमानाः क्रियावद्योतका उपसर्गाः अवद्योतनं चोपलक्षणम् । अधिकार्था विपरीतार्थाश्चोपसर्गा गृह्यन्ते । यथा ऽभ्यागच्छति प्रतिष्ठतइत्यादिषु तदस्य निग्रहस्थानत्वं वार्तिककार उपपादयति । अभ्युपगतेति । यथा च साधनवादिनो ऽर्थान्तरं निग्रहस्थानमेवमुत्तरवादिनो ऽपि द्रष्टव्यम् ॥७॥

वर्णक्रमनिर्देशवन्निरर्थकम् । ( सू. ८ ) ॥

वर्णक्रमनिर्देशवदिति वतिः । अत्र यदा द्राविडः स्वभाषया तद्भाषानभिज्ञमार्यं प्रति शब्दनित्यत्वं प्रतिपादयति तदा तन्निरर्थकं निग्रहस्थानं स खल्वार्यभाषां जानन्नसामर्थ्यप्रच्छादनाय तद्भाषानभिज्ञतया वा स्वभाषया साधनं प्रयुक्तवान् सो ऽयं पूर्वस्मिन्कल्पे विप्रतिपत्त्या निगृह्यते उत्तरस्मिँस्त्वप्रतिपत्त्या । वस्तुतः साधनसामर्थ्ये ऽपि मूकवदार्यप्रतिपादकशब्दाप्रतीतेस्तत्प्रतिपादनारम्भवैयर्थ्यात् । अत्रैव दृष्टान्तमात्रतया वतिना अत्र वर्णक्रमो दर्शितो न पुनरेतदुदाहरणं निग्रहस्थानस्य येन कपोलवादित्रादावपि प्रसङ्गः । यथा हि द्राविडस्यार्थभेदविवक्षोत्थापितं वचनं नैवं वर्णक्रमनिर्देशः कपोलवादित्रं वा अप्रतिपादकत्वसामान्याद्वर्णक्रमनिर्देशवदिति दृष्टान्तः । अत एवाह भाष्यकारः ।

एवंप्रकारामिति । न पुनरिदमेवेत्यर्थः । वार्तिकमुदाहरणं भाष्यइति । (५५५।३) एवंप्रकारोदाहरणमित्यर्थः । साधनानुपादानादिति । परप्रतिपादकं पञ्चावयवं वाक्यं साधनं तच्चेन नोपात्तं तस्य स्वसमयेन प्रतिपादकत्वे ऽप्यार्यान् प्रत्यप्रतिपादकत्वादित्यर्थः ॥ ८ ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ( सू. ९ )॥

यद्वाक्यं परिषदा प्रतिवादिना च न विज्ञायते समानसंकेतेन वादिना त्रिरभिहितं यावद्भिर्वारैः परिषत्प्रतिवादिनोरर्थप्रत्ययो भवति स च प्रायेण त्रिभिरिति त्रिरभिहितमित्युक्तम् । ननु समानसङ्केतेन वादिना त्रिरभिहितमविज्ञातार्थं चेति न संभवति । सम्भवे वा परिषत्प्रतिवादिनै जडौ न च जडानवबोधे प्रतिपादकस्य कश्चिदपराधः । न हि बधिरो गीतं न शृणोतीति गायनस्य कश्चिदपराध इत्यत आह । श्लिष्टशब्दमसति प्रकरणादौ नियामके यथा श्वेतो धावतीति । अप्रतीतप्रयोगं जर्भरीतुर्फरीतू इति । अतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातार्थम् । अस्य निग्रहस्थानत्वमाह । असामर्थ्येति । वार्तिकं भाष्यव्याख्यया गतार्थम् ॥९॥

पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् (सू. १०)

यत्रानेकस्य पदस्याश्लिष्टस्य प्रतीतयोगस्याद्रुतोच्चारितस्य वाक्यस्य चानेकस्य पौर्वापर्येणायोगः सम्बन्धो नास्तीति तस्मादसम्बद्धार्थता गृह्यते तदपार्थकं निग्रहस्थानं निष्प्रयोजनं, कस्मात् ? समुदायार्थस्य वाक्यार्थस्य वा ऽपायाद्वाक्यमहावाक्यार्थप्रत्यायनप्रयोजनो हि पदानां वाक्यानां वा प्रयोगो ऽसति तस्मिन्नपार्थकमित्यर्थः । वाक्यस्य पौर्वापर्यासम्बन्धउदा-

हरणमाह । यथा दश दाडिमानि षडपूपा इति । पदानां पौर्वापर्यासम्बन्धे उदाहरणमाह । कुण्डमजाजिनम् इति । रौरुकं रुरुसम्बन्धि । पाय्यं पाययितव्यम् । अप्रतिशीनो वृद्धः ।

वार्तिककारः शङ्कते । निरर्थकापार्थकयोरिति । परप्रत्यायनप्रयोजनं हि वचनोच्चारणं तत्र निरर्थकेनवापार्थकेनापि न परः प्रतिपाद्यतइति उभयोरभेदः । न च वर्णक्रममात्रमेकत्रान्यत्र च पदानीत्येतावता भेदेनोपादनं युक्तम् । एकत्र वाक्योपादानमन्यत्र पदोपादानमित्यपार्थकयोरप्यवान्तरभेदेन भेदोपादानप्रसङ्गादिति शङ्कार्थः । निराकरोति । भिद्यतइति । पृच्छति । कथम् । उत्तरम् । तत्रानर्थके वर्णमात्रम् अभिधेयशून्यम् इह त्वपार्थके पदानि पद्यते गम्यते ऽभिधेयमेभिरिति पदानि वाक्यानि चाभिधेयवन्ति असम्बद्धानि निरभिधेयनिष्प्रयोजनयोर्निरर्थकापार्थकयोर्महान्विशेषः । न त्वीदृशो वाक्यपदयोर्निष्प्रयोजनयोर्विशेषो येनात्रान्तरभेदमाद्रियामहे । परप्रत्यायनप्रयोजनाभावमात्रविवक्षया त्वविशेषे सर्वनिग्रहस्थानाविशेषः सर्वत्र परप्रत्यायनाभावात् । भात्रे वा निग्रहस्थानानुपपत्तेः ॥ १० ॥

अवयवविपर्यासवचनमप्राप्तकालम् ( सू. ११ ) ॥

व्याचष्टे प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः लक्षणानतिक्रमेण क्रमः उक्तमेतदस्माभिः प्रथमाध्याये ।यदपेक्षिताभिधायिनो वचनात्परे प्रतिपद्यन्ते नान्यस्य । तत्र प्रथमं साध्यनिर्देशो ऽपेक्षितः परैर्न तु साधननिर्देशः तत्र यद्ययं प्रथमं साधनमेव प्रयुञ्जीत कथमपेक्षितं ब्रूयाद्, अनपेक्षिताभिधायी च कथं प्रतिपादको नाम । तदेवं सर्वाण्येव हेतुवचनादीनि अपि क्रमवन्ति नाक्रमाणि प्रतिपादयितुमर्हन्तीति । विपरीतक्रमे-

न्यो ऽप्यर्थक्रमानुसरणादेवार्थप्रतिपत्तेः । सो ऽयं प्रतिज्ञादीनामर्थ एतादृशो य एषां क्रममन्तरेण न शक्यो ज्ञातुमिति । अवयवविपर्यासे त्वाकाङ्क्षाभावात् तत्पूर्वकत्वाच्च पदार्थसम्बन्धस्यासम्बन्धं निग्रहस्थानमित्यर्थः ।

वार्तिकं नैवमपि सिद्धेरित्येके । यथा ऽऽहुरत्रापि न कश्चित् क्रमनियम इष्टार्थसिद्धेरुभयत्राविशेषात् । यद्युच्येत अर्थशब्दवदयमस्माकं समयो यदनेन क्रमविशेषेणार्थः प्रत्येतव्यो नान्येनेति अतस्तथैव प्रतीयते न क्रमान्तरेणेत्यत आह । समयानभ्युपगमाच्च । पदेष्वेव समयपूर्वकः प्रत्ययो न वाक्येषु अभिनवकविरचिततत्समयानपेक्षादेव वाक्यादर्थप्रतीतेः । स्यादेतद् वाक्येष्वपि क्रमनियमो दृष्टः यथा पाचयां बभूवेति न पुनर्बभूवपाचयामिति अत आह प्रयोगाच्चेति । तत्र लौकिकः प्रयोगो नियत इह त्ववयवव्यत्ययस्यापि दृष्टः प्रयोग इत्यर्थः । तदेतद्दूषयति । यत्तावन्नैवमपि सिद्धेरिति । तत्रोत्तरं प्रयोगोपेतशब्दवदेतत् । एतदेव विवृणोति । यथा गौरित्यस्यैव पदस्यार्थं गावीति प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रत्याययति । (५५६ । १) यद्यपि शब्दानामर्थप्रत्यायनं न स्वाभाविकं तथा ऽपि परमेश्वरसङ्केतपूर्वकमद्य यावदनुवर्त्तते ऽत एव साधवो ऽर्थभेदे शब्दभेदा येषां पारमेश्वरसङ्केतः तदसङ्केतात्तु प्रवर्त्तमाना अप्यर्थे ऽसाधवः शब्दा अपभ्रंशा भवन्ति । तदपेक्षाश्च साधुभिर्भाषितव्यमित्यादयो विधयो धर्मेषु निन्दार्थवादाश्च मन्त्रो हीनः स्वरतो वर्णत इत्यादयः वेदानां च प्रामाण्यं प्रतिपादितं द्वितीये ऽध्याये । न चायमर्थो ये ये साधवस्ते सर्वे धर्महेतव इति, किं तु धर्मानुष्ठाने तदनुरूपभाषणे प्राप्ते साधुभिरेवेति नियम्यते । तदेवं

व्यवस्थिते अविशेषेण गोगाव्यादिशब्दा आर्येण प्रयुज्यमाना दृश्यन्ते तत्रैते किमविशेषेणैव साधव उत कश्चिदेकः साधुः तत्पूर्विकेतरेभ्यः प्रतीतिः तत्रैकशब्दस्य साधुत्वकल्पनायामितरस्मात् तन्मूलतयाऽर्थप्रतिपत्त्युपपत्तौ न सर्वत्र साधुत्वकल्पना युक्ता। यथा ऽऽह स्मात्रभवान् जैमिनिरन्यायश्चानेकशब्दत्वमिति। तत्रापि कतमस्यासाधुत्वमेकस्यैतोक्तेति जिज्ञासायां तत्र तत्त्वमभियोगविशेषात्स्यादिति यो ऽभियुक्ततमैरिन्द्रपाणिनिप्रभृतिभिः साधुत्वेनाविगानतः स्मर्यते स साधुरितरो ऽसाधुरिति निश्चीयते। तेन यद्यपि लौकिका गाव्यादिशब्देभ्य एव गवाद्यर्थमधिगच्छन्तीति दृष्टार्थमात्रव्यवहारिणः प्रतिपत्तिस्तथा ऽपि परीक्षकाणां विचारयतामेवं विचारक्रमो यद्वृद्धतमेन गोशब्दे प्रयोक्तव्ये प्रमादाद्गावीशब्दः प्रयुक्तः ततश्च वृद्धतरेण गोशब्दमुन्नीय गोत्वं प्रतीतम्। यथा ऽऽहुः।

'अम्बाम्बेति यदा बालः शिक्षमाणः प्रभाषते।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः॥
एवं साधौ प्रयोक्तव्ये यो ऽपभ्रंशः प्रयुज्यते।
तेन साधुव्यवहितः कश्चिदर्थो ऽभिधीयते।'

पार्श्वस्थाश्चातो ऽनेन मूलशब्दमुन्नीयार्थः प्रतीत इत्यगृहीत्वैव गावीशब्दादेवायममुमर्थं प्रतीतवानिति तमेव गोत्वस्य वाचकमवगम्यान्येषां वृद्धो बभूव। ततः प्रभृत्यननुसृतमूलशब्दानामयं वाचकत्वभ्रमो ऽपभ्रंशे वर्तते न वृद्धतरस्योभयवेदिनो मूलशब्दानुसारिणी पदार्थप्रतिपत्तिरिदानींतनानां त्वपभ्रंशादेव अत एवान्वाख्यानमपि प्रयोजनवत्। असत्यस्मिन् वाचकापभ्रंशविभागे ज्ञानाभावात्साधुभिर्भाषितव्यमिति नियमाविधेर्न म्लेच्छितवै नापभाषितवै इति निषेधस्य च विषयसंशयेन दुरधिगमत्वेन धर्मानुष्ठानस्या-

शक्यत्वप्रसङ्गात् । यत्रार्थे यस्य शब्दस्य भगवतेश्वरेण सङ्केतः कृतः स तत्र साधुरसाधुरन्यत्र यथा य एवाश्वशब्दो दरिद्रे साधुः स एवासाधुर्वाजिनि प्रयुज्यमानः यथा नकुलदंष्ट्राग्रस्पृष्टा या का चिदोषधिरसौ सर्पविषं हन्ति एवमीश्वरेण कृतसङ्केतः शब्दः साधुर्धर्मउपयुज्यते नान्य इति । यववराहादिशब्दानामार्यम्लेच्छयोरर्थविवादे वैदिकाद्वाक्यशेषादार्यसंमतो ऽर्थो ग्रहीतव्यो न म्लेच्छसंमतः तत्र वैदिकवाक्यशेषविरोधात् । येषां तु शब्दानामार्येषु न दृष्टचरः प्रयोगः केवलैर्म्लेच्छैरेवार्थभेदे प्रयुज्यन्ते यथा पिकनेमतामरसादयः वेदे तु प्रयुक्तास्तेषां म्लेच्छव्यवहारादेवार्थो ऽवधारणीयः तत्र तेषामभियोगादिति आर्यव्यवहारापरिपन्थित्वाच्चेति । तदेवं व्यवस्थिते न्यायमीमांसापरिशीलनविकलानां बाह्यतराः प्रलापा उपेक्षणीयाः तस्मात्सुष्ठूक्तं प्रयोगापेतशब्दवदिति । न च शब्दान्वाख्यानं व्यर्थमिति चेति । प्रतिज्ञादीनां क्रमनियमकारणं प्रश्नपूर्वकं दर्शयति । तदेतत्कथं पूर्वं तावदिति । द्वितीयं देश्यमनुभाष्य परिहति । यत्पुनरेतत्समयानभ्युपगमादिति । सो ऽयमर्थस्यानुर्वी प्रतीतिबलप्रवृत्तामन्वाचक्षाणो नाभ्याख्येय इतिनोपालभ्यः । शास्त्रे वाक्यान्यर्थसंग्रहार्थमुपादीयन्तइति । न हि शास्त्रे कृत्स्नासदिवादरभूतदिवेत्यर्थसङ्ग्रहो यथा कथं चित् क्रियत इति वादेऽपि तथा क्रियतामिति युक्तं वादादिषु पक्षप्रतिपक्षवद्वक्रोरपि परीक्ष्यमाणत्वात् परीक्षितस्य च शास्त्रितत्वात् ॥११॥

हीनमन्यतमेनाप्यवयवेन न्यूनम् ( सू. १२ ) ॥

प्रतिज्ञादीनां पञ्चावयवानां मिलितानां साधनत्वमुपपादितम् । न्यूनत्वे साधनत्वं नास्ति तदभावे न साध्यसिद्धिः न हि सामग्रीनिष्पाद्यं कार्यं सामग्र्येकदेशाद्भवतीत्यर्थः । परेषां मतमुप-

न्यस्यति एके त्विति। एके तु प्रतिज्ञान्यूनं नामनिग्रहस्थानं नास्तीति ब्रुवते। दूषयति एतत्तु न युक्तमिति। किं प्रतिज्ञान्यूनं निग्रहस्थानान्तरं न भवति अथ निग्रहस्थानमेव न भवति। एतदेवाह किमसौ निगृह्यते न वेति। प्रथमकल्पे दोषमाह यदीति। द्वितीयकल्पे दोषमाह अथ न निग्रह इति। प्रतिज्ञायाः साधनाङ्गत्वमुक्तमित्यर्थः। यच्च ब्रवीषि दिङ्नागसिद्धान्तपरिग्रहएवेति। एतत्तु दूषयति। एतदपीति।(५९७।१)सिद्धसाध्यार्थयोः सिद्धान्तप्रतिज्ञयोर्महान् भेद इत्यर्थः॥ १२॥

हेतूदाहरणाधिकमधिकम् ( सू० १३ )॥

तदेतन्नियमाभ्युपगम इति भाष्यम्। यत्र कथमेतत्साध्यं सिध्यतीति जिज्ञासा तत्रैकेनैव साधनेन साध्यसिद्धेः साधनान्तराभिधानमनर्थकमिति। निष्पादितक्रिये कर्मणि अविशेषाभिधायिनः साधनस्य साधनन्यायातिपातात्। यत्र तु प्रतिवादिनः परिषदो वा जिज्ञासा भवति कति साधनानि संभवन्त्यस्मिन्साध्य इति तत्र यावन्ति साधनानि तावन्ति सर्वाण्येव वाच्यानि अन्यतराभिधाने निग्रहप्रसङ्गादिति, नाधिकं निग्रहस्थानमिति यआहुस्तन्मतमुपन्यस्यति। तच्च न दार्ढ्यादिति। दूषयति न दार्ढ्यार्थेति। यदि निश्चयो दार्ढ्यं तदेकस्मादेव प्रमाणाद्भवति अनिश्चायकस्याप्रमाणत्वात्। अथ स्फुटत्वं तदपि चेन्निश्चयः स दत्तोत्तरः। अथ सामान्यविशेषवद्वतां ग्रहणं न तदनुमानसहस्रैरपि तेषां सामान्यवद्द्रव्यमात्रविषयत्वात्। शङ्कते अथ ब्रवीषि द्वे अपि ज्ञापके इति। नास्माकमनधिगतार्थगन्तृत्वं प्रमाणत्वं येनैकेनाधिगते प्रमाणान्तरमप्रमाणं स्यात्। अपि तु गन्तृमात्रं प्रमाणं तच्च द्वितीयस्याप्यविशिष्टमिति शङ्कार्थः। निराकरोति

सत्यं द्वे अपि ज्ञापके इति । पुरुषोऽत्रापराध्यते यो ज्ञातमर्थमजिज्ञासितं ज्ञापयति न तु प्रमाणं तद्धि सामर्थ्येन मेये प्रवर्तत एव । यदि जिज्ञासायां सत्यां प्रवर्तते प्रतिपादयति ज्ञेयं नास्य कश्चिदपराध इति । न हि धान्येष्वलूनेषु दात्रमवश्यनं भवति तस्मादनपेक्षितकारणादनवस्थाप्रसङ्गाच्च पुरुषस्य निग्रह इति स्थितम् ॥१३॥

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् (सू. १४) ।

अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् । (सू. १५) ॥

तदनेन सूत्रद्वयेन पुनरुक्तमेकमेव निग्रहस्थानं कथं चिद्वान्तरभेदविवक्षयात्रिविधमुक्तं प्रपञ्चार्थम् । तदेव पुनरुक्तं क चिच्छब्दाभ्यासात् क चित्पर्यायान्तरात् क चिदर्थादिति । आक्षिपति नाबाधनादिति । समाधत्ते सत्यमिति । जल्पवितण्डयोर्वक्तुर्नैपुण्यं चिन्त्यते । पुनरुक्तप्रयोगे त्वनिपुणः स्याद् अनपेक्षिताभिधानात्साधनस्य विषयः साध्योऽर्थो न सिद्धः तस्यापरिज्ञानान्निगृह्यते । वैयर्थ्यं चानर्थक्यं विरुद्धप्रयोजनत्वं वाभिमतम् । तथा हि पुनरुक्तप्रयोगे तत्प्रयोजनानुसरणसमाकुलचित्तः प्रथमाभिधानादापाततः प्रतीतमप्यर्थमप्रतीतमिव मन्यमानो न निश्चेतुमर्हतीति ततश्च प्रतिपादनाय प्रवृत्तो न प्रतिपादयितेति विरुद्धप्रयोजनवत्त्ववैयर्थ्यं स्यादित्युपपन्नं निग्रहस्थानमिति ॥ १५ ॥

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ( सू० १६ ) ॥

व्याचष्टे विज्ञातस्य वाक्यार्थस्येति । निग्रहस्थानत्वेऽस्योपपत्तिमाह । अप्रत्युच्चारयन् किमाश्रयं प्रतिषेधं ब्रूयादिति ।

वार्तिकं नेदं निग्रहस्थानमिति केचित् । (५५८।९)

उत्तरेण उत्तरगुणदोषनिरूपणेन प्रतिवादिनो मूढत्वामूढत्वावस्थापनात्। एतद्विभजते उत्तरेण गुणदोषवर्तेतीति। तस्मात्किं पुनरुच्चारितेनोच्चारणेनास्ति प्रयोजनमिति शेषः। अस्ति हि कश्चिदिति क्वचित्पाठः। तत्रास्ति हीति निपातद्वयं वाक्यावतारे द्रष्टव्यम्। पुंसां विचित्रस्वभावत्वात् कश्चिदुत्तरे समर्थो न प्रत्युच्चारणे नासौ सदुत्तरमभिदधानः तावताऽननुभाषणमात्रेण निग्रहमर्हति। ननु यद्यननुभाषणं न निग्रहस्थानं तदाऽनुभाषितुमुपक्रम्य सर्वमननुभाषमाणो न निगृह्येतेत्यत आह। यस्त्वारभ्य न निर्वाहयेत् सदुत्तरं तु ब्रूयात् तस्य स्यात् खलीकारमात्रमसामर्थ्यकृतं न तु तत्त्ववादित्वविहतिरित्यर्थः। तमेतं भदन्ताक्षेपं समाधत्ते नोत्तरविषयापरिज्ञानादिति। दूष्यविषयं हि दूषणम् असति दूष्याभिधाने न शक्यं वक्तुम्। न खलु प्रतिज्ञाहेतूदाहरणोपनयनिगमनदोषास्तत्स्वरूपमनभिधाय शक्या दोषत्वेनावस्थापयितुमित्यनुच्चारयन्न दोषमभिधातुमर्हतीति। तदिदमुक्तं तदिदं व्याहतमुच्यते नोच्चारयति उत्तरं च ब्रवीतीति। स्यादेतद् न प्रतिवादिना सर्वं दूषणीयम् अन्यतमावयवदूषणेनैव साधनस्य दूषितत्वेन दोषान्तराभिधानवैयर्थ्यात्। न खलु मृतो मृत्युना रक्षितो मारयितुं शक्यः एवं दूषितमपि दूषयितुं, तस्मात् सत्यपि दूष्यबाहुल्ये ऽन्यतमं दूष्यं तथा च सर्वानुभाषणे सर्वस्यादूष्यत्वाद् यद्दूषणीयं तत्पुनरनुवाद्यमिति सर्वानुवादे द्विरनुवादो ऽदूष्यानुवादश्चेति दूषकनिग्रहस्थानद्वयं तस्मादनुभाषणमेव निग्रहस्थानमिति विपरीतमापतितमित्यत आह अप्रतिज्ञानाच्चेति। एतद्विभजते न चेदं प्रतिज्ञायते। पूर्वमेकग्रन्थेन सर्वमुच्चारयितव्यं पश्चादुत्तरं यद्दूष्यं तदनुवादेनाभिधेयं येन

दूष्यानुवादो द्विरनुवादश्च दोषौ स्याताम् अपि तु यथाकथंचिदुत्तरं वक्तव्यम् । उत्तरवादपरस्योत्तरमाश्रयाभावे न युक्तमिति तदाश्रयमात्रमनुवदितव्यं तदन्तरेणाशक्याभिधानत्वादुत्तरस्येति । तस्माद्युक्तं तन्मात्रस्याप्रत्युच्चारणमननुभाषणं न सर्वस्याप्रत्युच्चारणमननुभाषणमित्यर्थः । नन्वप्रतिभाया निग्रहस्थानत्वविधानेनाननुभाषणस्यापि विदितं तस्य तद्विशेषत्वात् । न खलु नानुभाषतइत्येतावतैव निगृह्यते अपि त्वननुभाषमाणो दूष्यं न बुध्यते अबुध्यमानश्च तत्रोत्तरं न प्रतिपद्यते ततो ऽप्रतिभया निगृह्यते । तदेवमननुभाषणमप्रतिभाविशेष इति अप्रतिभाया विहितं निग्रहस्थानत्वं तद्विशेषे ऽपि विहितं भवति । यथा गवि सास्नादिमत्त्वं विहितं शाबलेये ऽपि विहितं भवति न पुनस्तत्र सास्नादिमत्वविधानाय पृथग् यत्नान्तरमारभन्ते ।

अत्र ब्रूमः, न तावदुत्तराप्रतिपत्तिसामान्यविशेषो ऽननुभाषणं पुंसां सामर्थ्यवैचित्र्यात् । कश्चिद्दूष्यं दूषणं च विद्वानपि नानुभाषितुं पारयति बहुवचनकुण्ठत्वात् । तस्मादसत्यामप्रतिभायामननुभाषणसम्भवान्नाप्रतिभाया विशेषो ऽननुभाषणमिति । कश्चिद्दूषणविषयं वेदानुभाषते च उत्तरप्रतिपत्तिविकलस्तु स्यात्सो ऽयमप्रतिभया निगृह्यते नाननुभाषणेन तत्र सामर्थ्यात् । कश्चित्पुनर्दूष्यमेव न जानाति सो ऽज्ञानेन निगृह्यते न चाज्ञाने ऽननुभाषणमवश्यंभावि धारणावतो ऽर्थानिरूपणे वाद्युदीरिताक्षरस्वरूपमात्रपाठसम्भवेनानुभाषणोपपत्तेः । अप्रतिभा त्ववश्यं भवेद् न ह्यस्ति सम्भवो दूष्यं न वेदास्य दूषणं तु वेदेति । तथाऽपि स्वरूपतस्तावद्भेदः न हि यदेव दूषणविषयमज्ञानमप्रतिभा तदेव दूष्यविषयमज्ञानं तस्मात्सत्यप्यननुभाषणाप्रतिभाज्ञानानामुत्तरानभिधानफलत्वे तुल्ये अवान्तरभेदविवक्षया भेदेनोपन्यासः ।

त्रिरभिहितस्येति । त्रिरभिधानमेवमप्यप्रतिपद्यमानस्यातिजडतया न वादे ऽधिकार इत्यभिसंधिमत इति ॥ १६ ॥

अविज्ञातं चाज्ञानम् ( सू० १७ ) ॥

तद्व्याचष्टे विज्ञातार्थस्य परिषदेति । निग्रहस्थानसामान्यलक्षणमत्र योजयति वार्तिककारः । अप्रतिपत्तितो निग्रहस्थानमिति ॥ १७ ॥

उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥

तद्व्याचष्टे । परपक्षेति । वार्तिकं श्लोकपाठादिभिरवज्ञां दर्शयन्निति । अर्थान्तरे हि निग्रहस्थाने प्रसक्तानुप्रसक्तं तत्सिद्ध्यर्थताव्याजेनावतारयता न प्रकृतावज्ञानं क्रियते इह त्वज्ञानमेतावता भेदेनोपन्यास इति । इयं चाप्रतिभा सम्यक्साधनोपन्यासे द्रष्टव्या साधनाभासोपन्यासे तु पर्यनुयोज्योपेक्षणम् ॥ १८ ॥

कार्यप्रसङ्गात्कथाविच्छेदो विक्षेपः ( सू० १९ ) ॥

साधनस्य दूषणस्य चोपन्यासमभ्युपगम्य तदवस्थः प्रतीयमान एव प्रतिवादिनो दार्ढ्यं सभ्यानां वा कठोरत्वमवगम्याकस्मात्कार्यं व्यासज्याभ्युपगतां कथां व्यवच्छिनत्ति तत्र विक्षेपो नाम निग्रहस्थानम् । तदनेनाप्रतिभया तूष्णींभावोऽपि संगृहीतो वेदितव्यः । कार्यव्यासङ्गस्याभ्युपगतकथाविच्छेदमात्रोपलक्षणत्वात् । न चेदमर्थान्तरं तत्र प्रकृतमेव साधयामीति व्याजेन प्रसक्तानुप्रसक्तावतारेण कथाविच्छेदाभावाद् इह तु कथाविच्छेदात् । न चास्य हेत्वाभासेष्वन्तर्भावः । न हि विक्षेपस्यान्यतमलिङ्गधर्मानुविधानं नापि प्रकृतसाध्यसिद्धये प्रयोगो येन हेत्वाभासः स्यात् । न च वादिनो विक्षेपो हेत्वाभासः । अनन्तरं कथामभ्युपेत्यैव हेतुमनभिधायापसरणात् । यदि चायं सम्यञ्चं हेतुमभिधाय तत्समर्थनासमर्थो ऽपसरेत् किमेतावता

न निगृह्येत हेत्वाभासेन वा निगृह्येत किं तु व्यासङ्गादेव। अनर्थकापार्थकाभ्यां तु भेदोऽस्य स्फुट एव। न ह्यत्रासमानसंकेतः प्रतिपादको येनानर्थकः स्यात्। नापीह पदानि वाक्यानि वा पौर्वापर्येणासम्बन्धानि येनापार्थकः स्यात्। न चावज्ञानं येनाप्रतिभा भवेत्। तस्माद्विक्षेपः पृथङ् निग्रहस्थानमिति सिद्धम् ॥१९॥

स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ( सू. २० ) ॥

व्याचष्टे यः परेण देशित दोषं स्वपक्षेऽभ्युपगम्य। कथं ज्ञायते अभ्युपगम्यतइत्यत आह। अनुद्धृत्येति। अनभ्युपगमे ऽसावुद्धरेदिति भावः। वार्तिकं किं तु परस्वेनानतिसृष्टेनादत्तेनेत्यर्थः। (५५९।१३) प्रसङ्गविधानान्न निग्रहस्थानमित्यन्य इति। यदि पुरुषत्वाच्चोरो ऽहं ततो भवानपि चोरः स्यात्। न च भवत एवमिष्टं तस्मात्त्वयैवानैकान्तिकत्वान्नायं हेतुरिति प्रसङ्गविपर्ययः तस्मान्नात्मनश्चोरत्वमनेनाभ्युपगतमिति मतानुज्ञा नासौ निग्रहस्थानमित्यर्थः। निराकरोति एतत्तु न, कस्मात् अत एव। कुतः! यत एवासौ उत्तरे कर्तव्ये प्रसङ्गं करोति अत एव निगृह्यते। यदि हि वादी प्रतिवादिनं ब्रूयात्सत्यमहं चोर एवेति तदा किमनैकान्तिकत्वं शक्नुयात्कर्तुम्। तस्मात्पुरुषत्वं न चोरत्वहेतुः अपि तु परस्वेनादत्तेन सम्बन्ध इत्युत्तरे कर्तव्ये यदुत्तराभासमाह तेन ज्ञापयति नूनमयं सम्यगुत्तरं न जानाति सम्यगुत्तराज्ञानान्निगृह्यते, तच्चोत्तरापरिज्ञानं मतानुज्ञाद्वारेणोद्भाव्यमानं मतानुज्ञेत्युच्यते ॥ २० ॥

निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्। ( सू. २१ ) ॥

व्याचष्टे पर्यनुयोज्यो नामेति। निग्रहस्योपपत्तिः प्रमा-

णतः सिद्धिस्तथेत्यर्थः। एतत्तु न तावद्वादिनोद्भावनीयं न ह्यसौ स्वस्वसाधनावद्यमनुन्मत्त उद्भावयति, नापि प्रतिवादिना न ह्यनुन्मत्त आत्मानमात्मना निगृह्णाति। अपि तु पर्यनुयोज्यं जानानः कस्मादुपेक्षते तस्मात्सभापतिना वादिप्रतिवादिभ्यामनुयुक्तया वा परिषदा तन्निग्रहस्थानमुद्भावनीयम्। अत्र च तत्त्वनिर्णयावसाने वादे द्वयोरपि निग्रहात्परिषदेव विजयते जल्पवितण्डयोश्च तत्त्वानपेक्षं पुरुषसामर्थ्यपरीक्षणप्रवृत्तयोः प्रतिवादी निगृह्यते। साधनाभासवादिना ऽपि वादिना स्फुरता प्रतिवादी स्तम्भितो यतः सम्यक्साधनोपन्यासो विहितः। प्रतिवादिन उत्तराप्रतिपत्तिरप्रतिभा साधनाभासोपन्यासे च उत्तराप्रतिपत्तिः पर्यनुयोज्योपेक्षणमिति विशेषः।

वार्त्तिकं नान्यवचनादित्येके। यत्र प्रतिवादी तूष्णींभवति तत्र तूष्णीम्भावेनैव वादिन उत्तरानर्हतां दर्शयन्नस्य साधनाभासवादितां सूचयति यत्रास्य दोषोद्भावनं सम्यग्दोषमनुक्त्वा करोति तत्राप्यसौ दुष्टमुत्तरं ददत्तत्साधनदोषमेव सूचयति। उपदिशन्ति हि वृद्धाः दुष्टे हि साधने दुष्टोत्तरं देयमिति। तस्मादवचने ऽन्यवचने वा न पर्यनुयोज्योपेक्षणं निग्रहस्थानमुभयथा ऽप्यनुपेक्षणादित्यर्थः। दूषयति तच्च नेति। (५६०।१) साधनस्य हि सम्यञ्चं दोषं जानन् तमेव ब्रूयात्। सो ऽयं प्राप्तावसरो ऽब्रुवन् विब्रुवन् वा नूनं न सम्यञ्चं दोषं जानाति। निश्चितप्रमाणभावस्य पुरुषस्येङ्गितादिभिरभिप्रायः सूच्यते न त्वनिश्चितप्रमाणभावस्य। यथाऽऽहुः।

श्रुतिस्मृत्यतिरेकेण युक्तजल्पाकभाषितम्।
तद्यथाश्रुति दुष्टं चेद् दुष्टमेवावधार्यताम्॥

इति सुष्ठूक्तं जानानो ऽप्ययं किमर्थमन्यद् ब्रवीतीति॥२१॥

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ( सू. २२ )

न चायमप्रतिभातो न भिद्यते । सा ह्युत्तराप्रतिपत्तिरियं त्वनुत्तरस्यैवोत्तरत्वेन (वि)प्रतिपत्तिरिति महान् विशेषः । अनेनैव सर्वा जातयो निग्रहस्थानत्वेन संगृहीता भवन्ति । न च हेत्वाभासानामितो न भेदः ते हि वादिनो निग्रहस्थानमयं तु प्रतिवादिन इति महान्विशेषः । अत एव भवतामपि गाथा ।

'असाधनाङ्ग वचनमदोषोद्भावनं तयोः ।

निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते इति ॥

अप्रतिभाया एव प्रसज्यप्रतिषेधात्मिकाया अस्या निरनुयोज्यानुयोगस्य भेदं दर्शयति भाष्यकारः । निग्रहस्थानलक्षणस्य मिथ्याध्यवसाया त्समारोपादिरर्थः । सुगमं वार्तिकम् ॥२२॥

सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गो ऽपसिद्धान्तः ( सू. २३ ) ॥

अभ्युपेत्येत्यस्य व्याख्यानं कस्य चिदर्थस्य तथाभावं प्रतिज्ञायेति । प्रतिज्ञातार्थविपर्ययादिति । अभ्युपेतार्थविपर्ययात्सिद्धान्तविपर्ययादित्यर्थः । तदेतदानियमादित्यस्य व्याख्यानम् । तत्र सांख्यीयं सिद्धान्तमाह । यथा न सदिति । तस्य पर्यायान्तरेण कथनं न सत इति । नासदात्मानमित्यस्य पर्यायान्तरेण विवरणं नासदुत्पद्यतइति । सोऽयं सिद्धान्तः सांख्यानां तमभ्युपेत्य तद्विपर्ययात्कथाप्रसङ्गमाह स्वपक्षं व्यवस्थापयति । पक्षावस्थानं दर्शयति । एका प्रकृतिर्व्यक्तस्योपलभ्यमानस्यार्थजातस्य युक्तेति प्रतिज्ञा । विकाराणामिति व्यक्तस्यैवानुवादः । अन्वयदर्शनादिति हेतुः । मृदन्वितानामिति साधर्म्योदाहरणं तथा यं ऽव्यक्तभेदः सुखदुःख-

मोहसमन्वितो गृह्यते इत्युपनयः। निगमनमाह तस्मात्सगन्वयदर्शनाद्विश्वव्यक्तस्य कैरित्यपेक्षायामुक्तं सुखादिभिरिति। एकप्रकृतिः सर्वो विकार इति सेयं कथा। सिद्धान्तमभ्युपेत्यैवमुक्तवान् सांख्यो नैयायिकेन पर्यनुयुज्यते। दूषणाय पृच्छ्यते। अथ प्रकृतिर्विकार इति कथं लक्षितव्यमिति। स एवं नैयायिकेन पृष्टः सांख्य उत्तरमाह यस्यावस्थितस्य मृदादेर्धर्मान्तरानिवृत्तौ शरावविनाशे यद्धर्मान्तरं मणिकादि प्रवर्तते असदेव जायते सा प्रकृतिर्मृदादि। यद्धर्मान्तरं निवर्तते प्रवर्तते वा स विकार इति। एतस्मिन्नुदाहरणेऽपसिद्धान्तं योजयति। सोयं प्रतिज्ञातार्थस्य सिद्धान्तार्थस्य वादी विपर्ययादनियमात्कथां प्रसञ्जयति प्रतिज्ञातः सिद्धान्तः खल्वनेन नासदाविर्भवतीति उत्पद्यते न सत्तिरो भवतीति न विनश्यतीति। तथाऽपि कस्मादनेन सिद्धान्तो बाध्यते अथ सिद्धान्तेनैव कस्मान्न बाध्यतइत्यत आह। सदसतोश्चेति। इदं हि लौकिकं प्रमाणसिद्धं सिद्धान्तस्त्वभ्युपगममात्रसिद्धोऽप्रामाणिकः तस्मादनेन सिद्धान्तो बलवता बाध्यते। तदेतन्मृद्धर्माणामपि न स्यादिति। न केवलं प्रेक्षावतां कर्तॄणामपि तु सद्धर्माणामप्युत्पादविनाशौ प्रवृत्त्युपरमौ दृश्यमानौ न स्यातामित्यर्थः। एवं प्रत्यवस्थितः सांख्यो नैयायिकेन पृष्टो यद्यसत आत्मलाभं सतश्चात्महानमभ्युपैति ततोऽस्यापसिद्धान्तो भवति। अथ नाभ्युपैति पक्षो ऽस्य न सिद्ध्यति। विकारो ह्यनेन पक्षीकृत एकप्रकृतित्वेन तत्र विकाराणामनिरूपणात् तदभावे न प्रतिज्ञार्थो न च हेत्वर्थः आश्रयासिद्धत्वात्। नन्वेवं प्रतिज्ञातार्थविरोधित्वात्सतो निरोधस्यासतश्चो-

त्पादस्य हेत्वाभास एव निग्रहस्थानं भवेत्। प्रतिज्ञाविरोधो वेत्याशङ्क्य वार्तिककार आह। प्रतिज्ञातार्थव्यतिरेकेणेति। न ह्यत्रैकप्रकृतयो विकाराः एकप्रकृतिकत्वादित्ययं हेतुः साध्यविरुद्धेन व्याप्त उद्भावितो येन विरुद्धो भवेत्। नाप्येकप्रकृतिकत्वं विकाराणां शब्दतो विरुद्धं समन्वयेन हेतुना येन प्रतिज्ञाविरोधो भवेत्। वैभवमात्रेण च प्रतिज्ञाहेत्वोर्विरोध इत्यत्रोक्तं वार्तिककृता स्वसिद्धान्तस्य गोत्वादेर्नित्यत्वविरोधाद्विरोध इति। अपि च तत्र बलवता सिद्धान्तेनानैकान्तिकदेशना बाध्यते इह तु सिद्धान्त एव बाध्यते। दुर्बल इत्युदाहरणपौनरुक्त्यमपि नास्ति। तस्माद्यत्र प्रतिज्ञार्थेन विरोधः तत्र विरुद्धो हेत्वाभासः प्रतिज्ञाविरोधो वा इह तु प्रतिज्ञार्थव्यतिरेकेणाभ्युपगमान्तरेण विरोध इति पुरुषस्य पूर्वापरविरुद्धार्थाभिधायिनो ऽसामर्थ्यान्निग्रहस्थानं जल्पवितण्डयोरिति सिद्धम्॥ २३॥

हेत्वाभासाश्च यथोक्ता (सू. २४)॥

व्याचष्टे हेत्वाभासाश्चेति। यद्यनुक्तमपि किंचिदवशिष्यते निग्रहस्थानं तच्चकारेण समुच्चेयम्। यथोक्ता इति सूत्रावयवनिराकरणीयामाशङ्कामाह। किं पुनर्लक्षणान्तरयोगाद्धेत्वाभासा निग्रहस्थानतामापद्यन्ते यथा प्रमाणानि प्रमेयत्वं तेषामेव प्रत्यक्षादीनामुपलब्धिसाधनत्वेन लक्ष्यमाणानां प्रमाणत्वं प्रमाव्याप्यतया प्रमेयत्वं लक्षणान्तरेण प्रमाणानि प्रमेयत्वमापद्यन्तइति शङ्कायाः सम्भवादत आह भगवान् सूत्रकारः यथोक्ता इति। सकलशास्त्रार्थमुपसंहरति। तइमे प्रमाणादय उद्दिष्टा लक्षिताः परीक्षिताश्चेति। इतिः शास्त्रपरिसमाप्तौ। वार्तिककारः संगृह्णाति जातीनां सप्रपञ्चानामिति। निग्रहस्थानलक्षणमिति। समासेन जातीनामपि प्रति-

वादिनिग्रहस्थाने ऽस्ति निवेश इति सूचयति। शास्त्रस्य चोपसंहार इति । तइमे प्रमाणादय उद्दिष्टा इत्यनेन कृत इत्यर्थः ॥

यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ १ ॥
संसारजलधिसेतौ वृषकेतौ सकलदुःखशमहेतौ ।
तस्य फलमखिलमर्पितमेतेन प्रीयतामीशः ॥ २ ॥
तत्त्वज्ञानप्रसवसुरभिर्गूढबह्वर्थजाता
सेयं मोक्षामृतमयफला सूक्तिमञ्जुप्रवाला ।
प्रत्यक्षाप्तागममयमहान्यायमूला मनोज्ञा
टीकावीरुद्भवतु कृतिनां नन्दिनी षट्पदानाम् ॥ ३ ॥
क्रूराः कृतो ऽञ्जलिरयं बलिरेष दत्तः
कायो मया प्रहरतात्र यथाभिलाषम् ।
अभ्यर्थये वितथवाङ्मयपांशुवर्षै-
र्मा मा ऽऽविलीकुरुत कीर्त्तिनदीः परेषाम् ॥ ३ ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां पञ्चमो ऽध्यायः समाप्तः ॥

समाप्तश्चायं ग्रन्थः ॥

शुभम्भूयात् ॥

---

५ अध्याये १ आन्हिके ४३ सूत्राणि १७ प्रकरणानि २ आन्हिके २४ सूत्राणि ७ प्रकरणानि मिलित्वा ६७ सूत्राणि २४ प्रकरणानि ।

अस्मिन् न्यायशास्त्रेऽध्यायाः ५. आन्हिकानि १० प्रकरणानि ८४ सूत्राणि ५२८ पदानि १९६ अक्षराणि ८३८५ न्यायसूचीनिबन्धानुसारेण निर्दिष्टानि ।

# विज्ञापना ।

भारतवर्षीयाः सर्वेऽपि पण्डिताः प्रायशो जानन्त्येव श्रीमदापदेवविरचितं "मीमांसान्यायप्रकाशा"ख्यं पूर्वमीमांसाप्रकरणग्रन्थम् । स च समुचितव्याख्याभावादद्ययावत् महान्तं क्लेशमादधाति स्म पठने पाठने चेत्यपि न तिरोहितम् । सोऽयमिदानीमस्माभिः सरलया मूलमर्मप्रकाशिकया शास्त्रसम्प्रदायाद्यनुगतया श्रीकाशीहिन्दूविश्वविद्यालये पूर्वमीमांसाप्रधानाध्यापकैः पण्डितप्रवरैः श्रीचिन्नस्वामिशास्त्रिभीरचितया "सारविवेचिन्या"ख्यया व्याख्यया संयोज्य मुद्रापितः प्रकाशितश्च । अत्र चाध्येतॄणां सुखप्रतिपत्त्यर्थं सौमिक्या वेदेः प्रतिकृतिः दार्शिकवेदिस्वरूपं तदर्थानि पात्राणि च यथाशास्त्रमालिख्य मुद्रितानि । सुदृढं विश्वसिमो वयमस्य ग्रन्थस्य न कदाप्येतादृशमपूर्वमत्युत्तमं संस्करणमभूदिति । अतो मन्यामहे सर्वप्रकारेणापि महान्तमुपकारमादध्यादयमिदानीं छात्रेभ्य इति । अस्माभिरल्पान्येव पुस्तकानि मुद्रितानि । मूल्यमस्य सर्वोपकारार्थं रूप्यकद्वयमेव ( रू. २. ) निर्णीतम् । अतः प्रार्थयामहे जिघृक्षुभिस्त्वरितव्यमिति ।

न्यायसूत्रभाष्यमपि महर्षिवात्स्यायनप्रणीतं श्रीपण्डितवररघूत्तमविरचितेन भाष्यचन्द्रेण, महामहोपाध्यायपण्डितवरश्रीगङ्गानाथझाशर्मरचितेन खद्योतेन च सहितमस्माभिर्मुद्रितं विक्रयाय सन्नद्धं वर्तते । मूल्यमस्य १०) रूप्यकाणि ।

पत्रादिप्रेषणस्थानम्ः—

जयकृष्णदास हरिदास गुप्तः-"चौखम्बा संस्कृत सीरीज" आफिस,

विद्याविलास प्रेस, गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

# सूचीपत्रम्